स्थालीपाकं श्रपयित्वा । महाराजं वैश्रवणं यजेत आज्यभागान्ते महाराजाय स्वाहेति प्रधानहोमः स्विष्टकृदादिजयादयः परिषेचनान्ते नेन सर्पिष्मता स्थालीपाकेन ब्राह्मणं भोजयेत् । उत्तरविवक्षयेदं वचनम् । भोजयित्वा सिद्धिं वाचयीत पुष्टिरस्त्विति ॥ ३ ॥ * **एवमहरहरापरस्मात्तिष्यात्** ॥ ४ ॥ एवमिदं स्थालीपाकश्रपणादासिद्धिवाचनान्तमहरहः कर्तव्यमापरस्मात्तिष्यात् यावदपरस्तिष्य आगच्छति ॥ ४ ॥ * **द्वौ द्वितीये** ॥ ५ ॥ द्वितीये तिष्ये प्राप्ते द्वौ भोजयेत् । अन्यत्समानमेवमातृतीयात् ॥ ५ ॥ * **त्रीं-स्तृतीये** ॥ ६ ॥ तृतीये तिष्ये त्रीन् भोजयेदाचतुर्थात् ॥ ६ ॥ * **एवं संवत्सरमभ्युच्चयन** ॥ ७ ॥ एवमेतत्कर्म यावत्संवत्सरः पूर्यते तावत् कर्तव्यम् । ब्राह्मणभोजनं चाभ्युच्चयेन भवति चतुर्थीप्रभृति चत्वारः पञ्चमप्रभृति पञ्चेत्यादि ॥ ७ ॥ एवंकृते फलमाह—* **महान्तं पोषं पुष्यति** ॥ ८ ॥ महत्या पुष्ट्या युक्तो भवति ॥ ८ ॥ * **आदित एवोपवासः** ॥ ९ ॥ उपवासस्त्वादित एव पुष्ये भवति न प्रतिपुष्यम् ॥ ९ ॥ * **आत्ततेजसां भोजनं वर्जयेत्** ॥ १० ॥ आत्ततेजांसि तक्रवाजिनादीनि । तानि नोपभुञ्जीत ॥ १० ॥ * **भस्मतुषाधिष्ठानम्** ॥ ११ ॥ वर्जयेदित्येव । भस्मतुषांश्च नाधितिष्ठेत् नाक्रामेत् ॥ ११ ॥ * **पदा पादस्य प्रक्षालनमधिष्ठानं च वर्जयेत्** ॥ १२ ॥ एकेन पादेन पादान्तरस्य प्रक्षालनं अधिष्ठानं च न कुर्यात् ॥ १२ ॥ * **प्रेङ्खोलनं च पादयोः** ॥ १३ ॥ प्रेङ्खोलनं दोलनमितस्ततश्चालनम् ॥ १३ ॥ * **जानुनि चात्याधानं जङ्घायाः** ॥ १४ ॥ एकस्मिन् जानुनि इतरस्या जङ्घायाः आत्याधानमवस्थापनं च वर्जयेत् ॥ १४ ॥ * **नखैश्च नखवादनः** ॥ १५ ॥ स्पष्टम् ॥ १५ ॥ * **स्फोटनानि चाकारणात्** ॥ १६ ॥ सर्वसन्धीनां स्फोटनानि वर्जयेत् अकारणात् कारणं श्रमवातादि । वादनस्फोटनानीति समासपाठेऽप्येष एवार्थः ॥ १६ ॥ * **यच्चान्यत्परिचक्षते** ॥ १७ ॥ यच्चान्यदेवं युक्तं तृणच्छेदनादि शिष्टाः परिचक्षते गर्हन्ते तदपि वर्जयेत् ॥ १७ ॥ * **योक्ता च धर्मयुक्तेषु द्रव्यपरिग्रहेषु च** ॥ १८ ॥ एकश्चशब्दोऽनर्थकः । केचिन्नैव पठन्ति । धर्माविरुद्धा ये द्रव्यपरिग्रहास्तेषु च योक्ता उ-

त्पादयिता स्यान्निरीहस्स्यात् ॥ १८ ॥ ***प्रतिपादयिता च तीर्थे ॥१९॥** तीर्थं गुणवत् पात्रं यज्ञो वा । तत्र द्रव्यस्यार्जितस्य प्रतिपादयिता स्यात्॥ १९॥ ***यन्ता चातीर्थे यतो न भयं स्यात् ॥२०॥** यन्ता नियन्ता अप्रदाता अतीर्थे यन्ता च स्यात् । यतः पुरुषादप्रदानेऽपि न भयं स्यात् । भयसम्भवे तु पिशुनादिभ्यो देयम् ॥२०॥ ***सङ्ग्रहीता च मनुष्यान् ॥२१॥** अर्थप्रदानाप्रियवचनानुसारादिभिर्मनुष्याणां सङ्ग्रहणशीलस्स्यात् ॥ २१ ॥ ***भोक्ता च धर्माविप्रतिषिद्धान् भोगान् ॥२२॥** धर्माविरुद्धा ये भोगाः स्रक्चन्दनस्वभार्यासेवादयः, तेषां च भोगशीलस्स्यात्॥ २२ ॥ ***एवमुभौ लोकावभिजयति ॥ २३ ॥** एवं महत्या पुष्ट्या युक्त उक्तप्रकारमनुतिष्ठन्नुभौ लोकावभिजयति भोगेनेमं लोकं तीर्थे प्रतिपादनेनामुं लोकमिति ॥ २३ ॥

इति विंशतितमी खण्डिका ॥प्र०२ प०८ ख० २०॥

### इति चापस्तम्बधर्मसूत्रवृत्तौ हरदत्तमिश्रविरचितायाम् उज्ज्वलायां द्वितीयप्रश्ने अष्टमः पटलः ॥८॥

---

सर्वाश्रमाणां समयपदानीत्युक्तं पुरस्तात् । के पुनस्ते आश्रमा इत्यत आह— ***चत्वार आश्रमा गार्हस्थ्यमाचार्यकुलं मौनं वानप्रस्थ्यमिति ॥१॥** आश्राम्यन्त्येषु श्रेयोऽर्थिनः पुरुषा इत्याश्रमाः । एषा सामान्यसंज्ञा । उत्तरा विशेषसंज्ञाः । गृहे तिष्ठति कुटुम्बरक्षणपर इति गृहस्थः । तस्य भावो गार्हस्थ्यम् । स एक आश्रमः । आचार्यकुलं तत्र वासो लक्षणया सोऽप्येकः । 'मनु अवबोधने' मनुत इति मुनिर्ज्ञानपरः । तस्य भावो मौनम् । सोऽपरः । वनं प्रतिष्ठित इति वनप्रस्थः स एव वानप्रस्थः । प्रज्ञादित्वादण् । तस्य भावो वानप्रस्थ्यम् । इतिशब्दः परिसमाप्त्यर्थः । एतावन्त एवाश्रमा इति चतुर्णामेवोपदेशेऽपि चत्वार इति वचनमैकाश्रम्यं त्वाचार्य प्रत्यक्षविधानात् गार्हस्थ्यस्येति स्मृत्यन्तरोक्तं माग्राहीदिति ॥१॥ ***तेषु सर्वेषु यथोपदेशमव्यग्रो वर्तमानः क्षेमं गच्छति ॥ २ ॥** तेष्वाश्रमेषु चतुर्ष्वपि यथाशास्त्रमव्यग्रस्समाहितमना भूत्वा यो वर्तते, स क्षेममभ-

यं पदं गच्छति । अनेनाश्रमविकल्प उक्तो वेदितव्यः । निश्रेयसार्थी नाऽन्यतमस्मिन्नाश्रमे यथाशास्त्रमवहितेन वर्तितव्यमिति । तथा च गौतमः—'तस्याश्रमविकल्पमेके ब्रुवत' इति ॥ २ ॥ * **सर्वेषामुपनयनप्रभृति समान आचार्यकुले वासः** ॥ ३ ॥ उपनयनप्रभृति य आचार्यकुले वासोऽष्टाचत्वारिंशदादीनामन्यतमस्स सर्वेषामाश्रमाणां समानः ॥ ३ ॥ * **सर्वेषामनूत्सर्गो विद्यायाः** ॥ ४ ॥ अनूत्सर्गः छान्दसो दीर्घः । विद्याया अनूत्सर्गोऽपि सर्वेषामाश्रमाणां समानः । तस्मादाचार्यकुले वासस्समान इति ॥ ४ ॥ * **बुध्वा कर्माणि यत्कामयेत तदारभेत** ॥ ५ ॥ प्रत्याश्रमं यानि कर्माणि विहितानि, तानि बुध्वा गृहस्थस्यैतानि कर्तव्यानि । एषामननुष्ठाने प्रत्यवायः फलं चेदमेषामेतान्यशक्यान्यनुष्ठातुं नैतानीत्याचार्यादुपश्रुत्य यत्कर्मफलं वा कामयेत तदारभेत तमाश्रमं प्रतिपद्येतेति ॥ ५ ॥ तत्र गार्हस्थ्यस्य पूर्वमेव प्रपञ्चितत्वादध्ययनानन्तरं प्रापित्सितस्याचार्यकुलस्य स्वरूपमाह—* **यथा विद्यार्थस्य नियम एतेनैवान्तमनूपसीदत आचार्यकुले शरीरन्यासो ब्रह्मचारिणः** ॥ ६ ॥ यथा विद्यार्थस्य उपकुर्वाणस्य ब्रह्मचारिणः 'अथ ब्रह्मचर्यविधि'रित्यारभ्याग्नीन्धनादिनियम उक्तः, अतस्तेनैव नियमेनान्तमाशरीरपातादुपसीदतः उपसदनमेवानूपसदनं तत्कुर्वतः आचार्यकुले शरीरन्यासः परित्यागो भवति । ब्रह्मचारिणो नैष्ठिकस्य तत्रैवामरणात्तिष्ठेत् , नाश्रमान्तरं गच्छेत् । यदि तमेवाश्रममात्मनः क्षेमं मन्येतेति । मनुः—'आचार्ये तु खलु प्रेते गुरुपुत्रे गुणान्विते । गुरुदारे सपिण्डे वा गुरुवद्वृत्तिमाचरेत् ॥ एषु त्वविद्यमानेषु स्थानासनविहारवान् । प्रयुञ्जानोऽग्निशुश्रूषां साधयेद्देहमात्मनः ॥ एवं चरति यो विप्रो ब्रह्मचर्यमविप्लुतः । स गच्छत्युत्तमं स्थानं न चेहाजायते पुनः ॥' इति ॥ ६ ॥ * **अथ परिव्राजः** ॥ ७ ॥ अथानन्तरं परिव्राजो धर्म उच्यते । दृष्टादृष्टार्थान् सर्वानेवारम्भान् परित्यज्यात्मलाभाय संन्यासाश्रमं प्रव्रजतीति परिव्राट् संन्यासी ॥ ७ ॥ * **अत एव ब्रह्मचर्यवान् प्रव्रजति** ॥ ८ ॥ अत एव ब्रह्मचर्याश्रमादेव ब्रह्मचर्यवानविप्लुतब्रह्मचर्यः परिव्रजति पारिव्रज्यां

कुर्यान्नदि तथैव पक्वकषायो भवति । श्रूयते च 'ब्रह्मचर्यादेव प्रव्रजेत् गृहाद्वा वानाद्वे'ति 'यदहरेव विरजेत्तदहरेव प्रव्रजेदि'ति च । अत्र केचिदाहुः—'अत एवेति वचनात् गृहाश्रमं प्रविष्टस्य तत्परित्यागेनाश्रमान्तरे प्राप्तिराचार्यस्यानभिमतमिति लक्ष्यते । तत्रायमभिप्रायः—दारपरिग्रहे सति 'यावज्जीवमग्निहोत्रं जुहुयादि'ति श्रुत्या विरुध्यते स कथं प्रव्रजेदिति । तस्मात्सत्यपि वैराग्ये काम्यस्य कर्मणः परित्यागेन नित्यानि नैमित्तिकानि च कर्माणि कुर्वन् प्रतिषिद्धानि वर्जयन् गृहस्थ एव मुच्यत इति । यथाह याज्ञवल्क्यः—'न्यायार्जितधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः । श्राद्धकृत्सत्यवादी च गृहस्थोऽपि विमुच्यते ॥' इति ॥ अथ योऽनाहिताग्निस्तस्य विरक्तस्य मुन्याश्रमप्रवेशे को विरोधः । ऋणश्रुतिविरोधः । 'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते । ब्रह्मचर्येणर्षिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य' इति । मनुरपि—'ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् । अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यधः ॥' इति । मोक्षो मोक्षाश्रमः । नन्वेवं ब्रह्मचर्यादपि प्रव्रज्या नोपपद्यते । अथ तत्र 'यदहरेव विरजेदि'ति श्रुत्या युक्तं प्रव्रजितुं विरक्तस्य, गार्हस्थ्यादपि भविष्यति । स्मर्यते च—'प्राजापत्यांन्निरुप्येष्टिं सर्ववेदसदक्षिणाम् । आत्मन्यग्नीन् समारोप्य ब्राह्मण प्रव्रजेदि'ति । तथा यो गृहस्थो वृद्धो मृतभार्यः पुनर्दारक्रियायामसमर्थ तस्यापि युज्यते प्रव्रज्या । तस्माद्यदहरेव विरजेदित्येष एव कालः प्रव्रज्यायाः, सर्वमन्यदविरक्तस्येति युक्तम् । एवकारस्तु सूत्रे श्रुत्यनुसारेण प्रयुक्तः । यथा गृहाद्वा वनाद्वेति ब्रुवाणैव श्रुतिर्ब्रह्मचर्यादेव प्रव्रजेदित्याह तथेति ॥८॥ ***तस्योपदिशन्ति** ॥९॥ तस्य परिव्राज कर्तव्यमुपदिशन्ति धर्मज्ञाः ॥९॥ ***अनग्निरनिकेतस्स्यादशर्माशरणो मुनिःस्वाध्याय एवोत्सृजमानो वाचं ग्रामे प्राणवृत्तिं प्रतिलभ्यानिहोऽनमुत्रश्चरेत्** ॥१०॥ ब्रह्मचारिणस्समिदाधानाद्यग्निकार्यं, गृहस्थस्यौपासनाद्यग्निहोत्रादि, वानप्रस्थस्य 'श्रामणकेनाग्निमाधाये'ति विहितेऽग्नौ होमादि, तस्य तु नैवंविधं किञ्चिदग्निकार्यमस्तीत्यनग्निः । निकेतो निवासस्थान स्वभूतं तदभावादनि

केतः । शर्म सुखं तदस्य नास्तीत्यशर्मा । किञ्चिदपि शरणं न प्रतिपन्नः न वा कस्यचिच्छरणभूत इत्यशरणः । स्वाध्यायः प्रणवादिपवित्राणां जपः । तत्र बोधायनः—'वृक्षमूलिको वेद सन्न्यासी वेदो वृक्षस्तस्य मूलं प्रणवः प्रणवात्मको वेदः प्रणवो ब्रह्मभूयाय कल्पत इति होवाच प्रजापति'रिति । तत्रैव वाचं विसृजेत् । अन्यत्र मौनव्रतः स्यात् । यावता प्राणा ध्रियन्ते सा प्राणवृत्तिः । तावती भिक्षा ग्रामे प्रतिलभ्य । एतावानस्य ग्रामे प्रवेशः अन्यदा बहिर्वासः । इहार्थाः कृष्यादयः परलोकार्थाश्च जपहोमादयो यस्य न सन्ति सोऽनिहोऽनमुत्र इत्युक्त । एवंभूतश्चरेत् । नैकस्मिन् ग्रामे द्व्यहमपि वसेत् । अत्र गौतमः — 'न द्वितीयामपर्तुरात्रिं ग्रामे वसेदि'ति 'वर्षासु ध्रुवशील'इति च ॥ १० ॥ * तस्य मुक्तमाच्छादनं विहितम् ॥ ११ ॥ यत् परैर्मुक्तं परित्यक्तमयोग्यतया, तत् तस्य विहितमाच्छादनं, तद्वास आच्छादयेत् । निर्णिज्येति गौतमः ॥ ११ ॥ * सर्वतः परिमोक्षमेके ॥ १२ ॥ सर्वैरेव वासोभिः परिमोक्षमेक उपदिशन्ति । न किञ्चिदपि वासो बिभृयात् । अनग्न एव चरेदिति । अपर आह—सर्वतो विधितो निषेधतश्चास्य परिमोक्षमेके ब्रुवते । न किञ्चिदस्य कृत्यं न किञ्चिदस्य वर्ज्यमिति ॥ १२ ॥ एतदेवोदाहरणैः प्रपञ्चयति—* सत्यानृते सुखदुःखे वेदानिमं लोकममुं च परित्यज्यात्मानमन्विच्छेत् ॥ १३ ॥ सत्यं वक्तव्यमिति योऽयं नियमस्तं परित्यज्य तथा तत्र वक्तव्यमनृतं तद्धि सत्याद्विशिष्यत इत्यादिके विषये अनृतं वक्तव्यमिति योऽयं नियमस्तं च परित्यज्य । सुखं मृष्टभोजनादिजन्यम् । दुःखं शीतवातादिजन्यम् । वेदान् स्वाध्यायाध्ययनम् । इमं लोकम् ऐहलौकिकं काम्यं कर्म । अमुं च लोकं पारलौकिकं काम्यं कर्म । सर्वमेतत् परित्यज्य आत्मानमध्यात्मपटलोक्तमन्विच्छेत् उपासीतेति तदेव ज्ञानबलावलम्बनेन सत्यानृतादिविधिनिषेद्धा ये स्वैरं प्रवर्तन्ते सिद्धाः तेषां मतमुपन्यस्तम् ॥ १३ ॥ अथैतेषामेवं स्वैरचारिणां किं तदत्र प्रमाणं तत्राह— * बुद्धे क्षेमप्रापणम् ॥ १४ ॥ आत्मनि बुद्धेऽवगते सति तदेव ज्ञानं सर्वमशुभं प्रक्षाल्य क्षेमं प्रापयति । श्रूयते हि— 'न कर्मणा वर्धते नो कनीयान् । त

स्यैवात्मा पदवित्तं विदित्वा । न कर्मणा लिप्यते पापकेने'ति 'तद्यथेषी कातूलमग्नौ प्रोतं प्रदूयत एव हास्य सर्वे पाप्मानः क्षीयन्त' इति च ॥ स्मर्यते च— 'यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन । ज्ञानाग्निस्सर्वकर्माणि भस्मसात्कुरुते तथा ॥' इति ॥ १४ ॥ तदिदं निराकरोति — *** तच्छास्त्रैर्विप्रतिषिद्धम् ॥ १५ ॥** यानि एतेरेव कर्तव्यप्रतिपादनपराणि शास्त्राणि, तैरेव तद्विप्रतिषिद्धम् । तत्र मनुः— 'क्रुध्यन्तं न प्रतिक्रुध्येदाक्रुष्टः कुशलं वदेत् । सप्तद्वारावकीर्णां च न वाचमनृतां वदेत् ॥ न चोत्पातनिमित्ताभ्यां न नक्षत्राङ्गविद्यया । नानुशासनवादाभ्यां भिक्षां लिप्सेत कर्हिचित् ॥' अतो यतिमेव प्रकृत्य यानि विहितानि कर्माणि तानि कर्तव्यानि । यानि च निषिद्धानि तानि च वर्जनीयानि ॥ १५ ॥ बुद्धे क्षेमप्रापणमित्येतत् प्रत्यक्षविरुद्धमित्याह— *** बुद्धे चेत्क्षेमप्रापणमिहैव न दुःखमुपलभेत ॥ १६ ॥** आत्मबोधमात्रेण चेत् क्षेम प्राप्यते, तदा इहैव शरीरे दुःखं नोपलभेत ज्ञानी । न चैतदस्ति । न हि ज्ञानिना मूर्धाभिषिक्तमन्योऽपि क्षुधादुःखमेव तावत् क्षणमात्रमपि संसोढुं प्रभवति ॥ १६ ॥ *** एतेन परं व्याख्यातम् ॥ १७ ॥** परलोके भवमपि दुःखमनेन व्याख्यातं न स्वैरचारिणा निवर्तेत इति । तस्मात् कर्मभिः परिपक्वकषाय एव श्रवणमनननिदिध्यासनैः साक्षात्कृतात्मस्वरूपः प्रतिषिद्धेषु कटाक्षमप्यनिक्षिपन्नष्टाङ्गयोगनियतो मुच्यत इति ॥ अत्रोदाहृतं ज्ञानेन सर्वं दह्यत इति तत्र ज्ञानदशायाः प्रागार्जितानि कर्माणि प्रायश्चित्तेन ज्ञानेन वा दह्यन्त इत्युच्यते, न पुनर्ज्ञानदशायां स्वैरचारोऽनुज्ञायते। तस्य हि स्वशरीरेऽपि बीभत्सा स कथं पश्वादिभिरविशेषस्त्रीसङ्गमादौ प्रवर्तेत इति । अत्र बोधायनः—'एकदण्डी त्रिदण्डीवे'ति । गौतमः— 'मुण्डश्शिखण्डी वे'ति ॥ १७ ॥ *** अथ वानप्रस्थः ॥ १८ ॥** अनन्तरं वानप्रस्थाश्रम उच्यते ॥ १८ ॥ *** अत एव ब्रह्मचर्यवान् प्रव्रजति ॥ १९ ॥** प्रव्रजति प्रकर्षेण व्रजति अपुनःप्रवेशाय वनं प्रतिष्ठित इति । तथा च गौतमः— 'ग्राम च न प्रविशेदि'ति । गतमन्यत्

उत्तरं च ॥१९॥ ***तस्योपदिशन्त्येकाग्निरनिकेतस्स्यादशर्माशरणो मुनिःस्वाध्याय एवोत्सृजमानो वाचम्** ॥२०॥ किंपुनरेकोऽग्निः । न तावदौपासनः । ब्रह्मचारित्वात् तस्माल्लौकिकेऽग्नौ यथापूर्वं सायंप्रातस्समिध आदध्यादित्यर्थो विवक्षितः । अपर आह— 'श्रामणकेनाग्निमाधाये'ति गौतमः । अस्यार्थः— श्रामणक नाम वैखानससूत्रम् । तदुक्तेन प्रकारेण एकोऽग्निराधेयः । तस्मिन् सायंप्रातरग्निकार्यमिति । तथाच बोधायनः—'वानप्रस्थो वैखानसशास्त्रसमुदाचारेण वैखानसो वने मूलफलाशी तपश्शीलस्सवनेषूदकमुपस्पृशन् श्रामणकेनाग्निमुपसमाधाये'त्यादि । अन्यद्गतम् ॥२०॥

**इत्येकविंशतितमी खण्डिका ॥ प्र०२ प०८ ख०२१ ॥**

---

***तस्यारण्यमाच्छादनं विहितम्** ॥१॥ अरण्ये भवमारण्यमजिनं वल्कलादि ॥१॥ ***ततो मूलैः फलैः पर्णैस्तृणैरिति वर्तयंश्चरेत्** ॥२॥ ततो मूलादिभिर्वर्तयन् वृत्तिः प्राणयात्रा तां कुर्वंश्चरेच्चरणशीलः स्यात् ॥२॥ ***अन्ततः प्रवृत्तानि** ॥३॥ मूलादिभिः स्वयंगृहीतैः कञ्चित्कालं वर्तयित्वा अन्ततः अन्ते प्रवृत्तानि स्वयमेव पतितानि अभिनिश्रयेदिति वक्ष्यमाणेन सम्बन्धः । तान्यभिनिश्रित्य तैर्वर्तयेदिति ॥३॥ ***ततोऽपो वायुमाकाशमित्यभिनिश्रयेत्** ॥४॥ ततः कियन्तञ्चित्कालमब्भक्षः ततो वायुभक्षः तत आकाशमभिनिश्रयेत् न किञ्चित् भक्षयेदिति । अभिनिश्रयणं सेवनम् ॥४॥ ***तेषामुत्तर उत्तरस्संयोगः फलतो विशिष्टः** ॥५॥ संयुज्यते सश्रयत इति संयोगः । तेषां मूलादीनां मध्ये उत्तरोत्तरसमाश्रयणं फलतो विशिष्टमिति द्रष्टव्यम् ॥५॥ ***अथ वानप्रस्थस्यैवानुपूर्व्यमेक उपदिशन्ति** ॥६॥ अथेति पक्षान्तरोपन्यासे । पूर्वं ब्रह्मचर्यादेव वनप्रवेश उक्तः । एके त्वाचार्यास्तस्यैव वानप्रस्थस्यानुपूर्व्यं कर्मोपदिशन्ति ॥६॥ कथं—***विद्यां समाप्य दारं कृत्वाग्नीनाधाय कर्माण्यारभते सोमावराध्यानि यानि श्रूयन्ते** ॥७॥ ब्रह्मचर्ये स्थितो विद्यां समाप्य गृहस्थश्च भूत्वाग्नीनाधाय कर्माणि कुर्यात् । कानि सो-

मावराध्यानि अवरार्धं पश्चार्धं तत्र भवोऽवराध्यः सोमः अवराध्यो येषां तानि सोमावराध्यानि सोमान्तानि हविर्यज्ञाख्यानि चातुर्मास्यादीनि हविर्यज्ञान् सोमं चेत्यर्थः । यानि श्रूयन्ते तानि श्रुतौ विहितानि ॥७॥ ***गृहान् कृत्वा सदारस्सप्रजस्सहाग्निभिर्बहिर्ग्रामाद्वसेत्** ॥८॥ अथ ग्रामाद्बहिररण्ये गृहान् कृत्वा सकुटुम्बस्सहैव चाग्निभिर्ग्रामाद्बहिर्वसेत् । अस्मिन्पक्षे प्रागुक्तमेकाग्निरित्येतन्नास्ति ॥८॥ ***एको वा** ॥९॥ अथवा पुत्रेषु भार्यां निक्षिप्य स्वयमेक एव वसेत् । अस्मिन् पक्षे प्राजापत्यान्निरुप्येष्टिमिति परिव्राज उक्तेन न्यायेन श्रौतानग्नीनात्मनि समारोप्य श्रामणकेनाग्निमाधाय एकाग्निर्भवेत् ॥९॥ ***सिलोञ्छेन वर्तयेत्** ॥१०॥ व्याख्यातः सिलोञ्छः । तेन वर्तयेत् प्राणयात्रां कुर्यात् । इदं सकुटुम्बस्य एकाकिनश्च साधारणम् । एकाकिन एवेत्यन्ये ॥१०॥ ***न चात ऊर्ध्वं प्रतिगृह्णीयात्**॥११॥ यदा सिलोञ्छेन वृत्तिर्जाता अत ऊर्ध्वं न कुतश्चिदपि प्रतिगृह्णीयात् ॥११॥ ***अभिषिक्तश्च जुहुयात्** ॥ १२ ॥ यदा जुहुयात्तदा अभिषिक्तः स्नातः । अनुवादोऽयं स्नाने विशेष विधातुम् ॥१२॥ ***शनैरपोऽभ्युपेयादभिघ्नन्नभिमुख आदित्यमुदकमुपस्पृशेत्** ॥१३॥ शनैरवेगेन जलाशयं प्रविशेत् । प्रविश्य चाभिघ्नन् हस्तेनोदकं ताडयन् उदकमुपस्पृशेत् स्नायात् आदित्याभिमुखः ॥१३॥ ***इति सर्वत्रोदकोपस्पर्शनविधिः** ॥१४॥ सर्ववर्णाश्रमसाधारणमेतत् । तथाचोत्तरत्र तस्य ग्रहणम् ॥१४॥ ***तस्य द्वन्द्वं द्रव्याणामेक उपदिशन्ति पाकार्थभोजनार्थवासिपरशुदात्रकाजानाम्** ॥१५॥ यानि पाकार्थानि तानि मृद्भाण्डादीनि । यानि च भोजनार्थानि कांस्यादीनि । वासिर्दर्व्यादि । तेषां सर्वेषां वास्यादीनां चतुर्णामेकैकस्य द्वे द्वे द्रव्ये उत्पाद्ये इत्येक उपदिशन्ति । काजमपि वास्यादिवदुपकरणविशेषो दारुमयः ॥ १५ ॥ ***द्वन्द्वानामेकैकमादायेतराणि दत्वारण्यमवतिष्ठेत** ॥१६॥ तेषां पाकादिसाधनानां द्रव्याणामेकैकं द्रव्यं स्वयमादायेतराणि भार्यायै दत्वा अरण्यमवतिष्ठेत उपतिष्ठेत आश्रयेदिति ॥ १६ ॥ **तस्यारण्येनैवात ऊर्ध्वं होमो वृत्तिः**

**प्रतीक्षाच्छादनं च** ॥ १७ ॥ तस्य वानप्रस्थस्यातोऽरण्यप्रवेशादूर्ध्वं आरण्येनैव नीवारादिना होमः वृत्तिः प्राणयात्रा प्रतीक्षा अतिथिपूजा च आच्छादन वल्कलादिना ॥ १७ ॥ ***येषु कर्मसु पुरोडाशाश्चरवस्ते कार्याः** ॥ १८ ॥ येषु दर्शपूर्णमासादिषु पुरोडाशा विहिताः गृहस्थस्य, तेष्वस्य तत्स्थाने चरवः कार्याः ॥ १८ ॥ ***सर्वं चोपांशु सह स्वाध्यायेन** ॥ १९ ॥ सर्वं च कर्मकाण्डं साङ्गं प्रधानमुपांशु भवति ! पारायणब्रह्मयज्ञाध्ययनेन सह तदप्युपांशु कर्तव्यमिति ॥ १९ ॥ ***नारण्यमभ्याश्रावयेत्** ॥ २० ॥ उपांशुवचनादेव सिद्धे वचनमाभिमुख्यप्रतिषेधार्थम् । तेनारण्यस्था यथा नाभिमुख्येन शृणुयुः तावदुपांश्विति ॥ २० ॥ ***अग्न्यर्थं शरणम्** ॥ २१ ॥ शरणं गृहं तदग्न्यर्थमेव ॥ २१ ॥ ***आकाशे स्वयम्** ॥ २२ ॥ स्वयं चाकाश एव वसेत् ॥ २२ ॥ ***अनुपस्तीर्णे शय्यासने** ॥ २३ ॥ शयनं चासनं चानुपस्तीर्णे देशे कुर्यात् न तु किञ्चित् उपस्तीर्य ॥ २३ ॥ ***नवे सस्ये प्राप्ते पुराणमनुजानीयात्** ॥ २४ ॥ नवे धान्ये श्यामाकनीवारादौ प्राप्ते जाते पुराणं पूर्वसञ्चितं सस्यमनुजानीयात् परित्यजेत् । तत्र मनुः—'त्यजेदाश्वयुजे मासि मुन्यन्नं पूर्वसञ्चितम् । जीर्णानि चैव वासांसि पुष्पमूलफलानि च ॥' इति ॥ २४ ॥

इति द्वाविंशतितमी खण्डिका ॥ प्र०२ प०९ ख०२२ ॥

---

***भूयांसं वा नियममिच्छन्नन्वहमेव पात्रेण सायंप्रातरर्थमाहरेत्** ॥ १ ॥ इदमेकाकिनो वानप्रस्थस्य भूयांसं नियममिच्छन् सस्यं सञ्चिनुयात् । किं तर्हि अन्वहमेव पात्रेण येनकेनचित् सायंप्रातश्चार्थमशनीयमात्रमाहरेत् वानप्रस्थेभ्य एव । एवं कियन्तञ्चित्कालं वर्तयित्वा ॥ १ ॥ ***ततो मूलैः फलैः पर्णैस्तृणैरिति वर्तयंश्चरेदन्ततः प्रवृत्तानि ततोऽपो वायुमाकाशमित्यभिनिश्रयेत् । तेषामुत्तर उत्तरस्संयोगः फलतो विशिष्टः** ॥ २ ॥ सर्वं गतम् ॥ निरूपिता आश्रमाः ॥ २ ॥ ***अथ पुराणे श्लोकावुदाहरन्ति—अष्टाशीतिसहस्राणि ये प्रजामीषिरऋषयः । दक्षिणेनार्यम्णः पन्थानं ते श्मशानानि भेजिरे** ॥ ३ ॥ अयमनयोः पक्षप्रतिपक्षरूपेण तेषा-

मेव प्राधान्यमप्राधान्यं च निरूप्यते । अष्टाशीतिसहस्राणि ये गृहस्था ऋषयः प्रजामीषिरे प्रजातिमभ्यनन्दन् ते अर्यम्णो यो दक्षिणेन पन्थाः दक्षिणायनमार्गः तं प्राप्य छान्दोग्योक्तेन धूमादिमार्गेण गत्वा पुनरपि सम्भूय श्मशानानि भेजिरे मरणं प्रतिपेदिरे । जायस्व म्रियस्वेत्याजीव जीविभावमापेदिर इति गृहस्थानां निन्दा ॥३॥ *अष्टाशीतिसहस्राणि ये प्रजां नेषिर ऋषयः । उत्तरेणार्यम्णः पन्थानं तेऽमृतत्वं हि कल्पते ॥४॥ ये तु प्रजातिं नाभ्यनन्दन् ते उत्तरायणमार्गेण प्राप्य अर्चिरादिमार्गेण गत्वा अमृतत्वं विभक्तिव्यत्ययः अमृतत्वाय कल्पते वचनव्यत्ययः कल्पन्ते सामर्थ्यात्सम्पद्यन्ते ॥४॥*इत्यूर्ध्वरेतसां प्रशंसा ॥५॥ गृहस्थादन्ये त्रयोऽपि ऊर्ध्वरेतसः । तेषामेषा प्रशंसेति पुनरपि तेषामेव प्रकारान्तरेण प्रशंसा ॥५॥* अथापि सङ्कल्पासिद्धयो भवन्ति ॥ ६ ॥ अथापि अपि सङ्कल्पादेव सिद्धयो भवन्ति तेषामूर्ध्वरेतसाम् ॥६॥ तत्रोदाहरणम्—*यथा वर्षं प्रजा दानं दूरेदर्शनं मनोजवता यच्चान्यदेवं युक्तम् ॥ ७ ॥ यदि महत्यामनावृष्टौ सत्यां वर्षतु देव इति ते कामयेरन् तदा कामवर्षं पर्जन्यो भवति । यदि वा कश्चिदपुत्रमनुगृह्णीयुः पुत्रोऽस्य जायतामिति स पुत्रवाननेन भवति । यदि चोलिष्ववस्थितास्तदैव हिमवन्तं दिदृक्षेरन् तथैव तद्भवति । मनस इव जवो येषां ते मनोजवाः तेषां भावो मनोजवता । यदि कामयेरन् अमुं देशमियत्यामेव कालकलायां प्राप्नुयामेति ततो यावता कालेन मनस्त देशं प्राप्नोति तावता तं देशं प्राप्नुयुरिति । यच्चान्यदेवं युक्तम् ॥ ७ ॥ *तस्माच्छ्रुतितः प्रत्यक्षफलत्वाच्च विशिष्टानाश्रमानेतानेके ब्रुवते ॥ ८ ॥ रोगिणामारोग्यादि तदपि सङ्कल्पादेव तथा भवति । यस्मादेवं तस्माच्छ्रुतितः श्रूयते श्रुतेः 'यदहरेव विरजेत्तदहरेव प्रव्रजेदि'त्यादिश्रुत्यनुगतत्वादुक्तेन प्रकारेण प्रत्यक्षफलत्वाच्च एतानूर्ध्वरेतसामाश्रमान् विशिष्टान् गार्हस्थ्यादुत्कृष्टानेके ब्रुवत इति ॥८॥ तदिदं गार्हस्थ्योत्कर्षप्रतिपादनेन निराकरोति —*त्रैविद्यविद्धानां तु वेदाः प्रमाणमिति निष्ठा तत्र यानि श्रूयन्ते ॥९॥ व्यवयवा विद्या त्रिविद्या त्रयो वेदाः । ता ये पाठतश्चार्थतश्च विन्दन्ति ते

त्रैविद्याः : तेषु पक्वज्ञानास्त्रैविद्यवृद्धाः । तेषां वेदाः प्रमाणं तेषां वेदशास्त्रविदां वेदा एव प्रमाणम् अतीन्द्रियेऽर्थ इति । निष्ठा निर्णयः । यथाह भगवान् जैमिनिः—'चोदनालक्षणोऽर्थो धर्मः प्रत्यक्षमनिमित्तमि'ति च । ततश्च तत्र वेदे यानि कर्माणि श्रूयन्ते किंलक्षणानि ॥९॥ ***व्रीहियवपश्वाज्यपयःकपालपत्नीसम्बन्धान्युच्चैर्नीचै कार्यामिति तैर्विरुद्ध आचारोऽप्रमाणमिति मन्यन्ते ॥१०॥** किंलक्षणाणि व्रीहियवादिभिस्सम्बन्धान्युच्चैः ऋचा क्रियते उपांशु यजुषेत्येवंप्रकाराणि तैर्विरुद्ध आचारः प्रमाणं न भवतीति मन्यन्ते । एतदुक्तं भवति । सर्वेषु वेदेषु सर्वासु च शाखासु अग्निहोत्रादीनि विश्वसृजामयनपर्यन्तानि कर्माण्येव तात्पर्यतो विधीयन्ते । अतो गार्हस्थ्यमेव श्रेष्ठम् । ऊर्ध्वरेतसां त्वाश्रमास्तद्विरुद्धा नैवाश्रयणीयाः । यदि वेदाः प्रमाणमिति । तथा च गौतमः—'ऐकाश्रम्यं त्वाचार्याः प्रत्यक्षविधानात् गार्हस्थ्यस्ये'ति । एवं गार्हस्थ्यं प्रशस्यते ॥१०॥ श्मशानानि भेजिर इति निन्दां परिहरति—***यत्तु श्मशानमुच्यते नानाकर्मणामेषोऽन्ते पुरुषसंस्कारो विधीयते ॥ ११ ॥** यत्तु गृहस्थानां श्मशानं श्रूयते स एष नानाकर्मणामग्निहोत्रादीनामन्ते पितृमेधाख्यः पुरुषसंस्कारो विधीयते । न तु पिशाचा भूत्वा श्मशानमेव सेवन्त इति ॥ ११ ॥ कुत इत्याह—***ततःपरमनन्त्यं फलं स्वर्ग्यशब्दं श्रूयते ॥ १२ ॥** ततः परं श्मशानकर्मणोऽनन्तरम् । अनन्त्यमपरिमितं स्वर्गशब्दवाच्यं फलं श्रूयते । 'स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकमेती'ति । स्वर्ग्यमिति यकारश्छान्दसः । उपसर्जनः अपपाठो वा ॥ १२ ॥

॥ **इति त्रयोविंशतितमी खण्डिका** ॥ प्र०२ प०९ ख०२३ ॥

---

पुनरपि गार्हस्थ्यमेव प्रकारान्तरेण स्तौति—***अथाप्यस्य प्रजातिममृतमाम्नाय आह । प्रजामनु प्रजायसे तदु ते मर्त्यामृतमिति ॥ १ ॥**
अथापि अपि च । अस्य गृहस्थस्य । प्रजाति प्रजासन्तानम् । अमृतम् अमरणम् । आम्नायो वेद आह । हे मर्त्य मरणधर्मिन् । प्रजां जायमानामनु त्वं प्रजायसे त्वमेव प्रजारूपेण जायसे । तदेव ते मरणधर्मिणः अमृ-

तममरणमिति न त्वं म्रियसे, यतस्त्वं प्रजारूपेण तिष्ठसीति ॥१॥ उपपन्नं चन्नादित्याह— * **अथापि स एवायं विरूढः पृथक्प्रत्यक्षेणोपलभ्यते दृश्यते चापि सारूप्यं देहत्वमेवान्यत्** ॥ २ ॥ अपि च स एवायं पृथग्विरूढः प्रत्यक्षेणोपलभ्यते । स एव द्विधाभूत इव लक्ष्यते । दृश्यते हि सारूप्य द्वयोः । देहमात्रं तु भिन्नम् । देहत्वमिति स्वार्थिकस्त्वः ॥२॥ यदि पुत्ररूपेणावस्थानं, किमेतावतेत्याह— * **ते शिष्टेषु कर्मसु वर्तमानाः पूर्वेषां साम्परायेण कीर्तिं स्वर्गं च वर्धयन्ति** ॥३॥ ते पुत्राः शिष्टेषु चोदितेषु कर्मसु वर्तमाना अवस्थिताः पूर्वेषां पितृपितामहादीनां साम्परायेण परलोकेन सम्बद्धानां कीर्तिं स्वर्गं च वर्धयन्ति । अस्यायं पुत्र एवं कर्मा अस्यायं पौत्र इति स्वर्गं च वर्धयन्ति । कीर्तिमतां हि स्वर्गवासश्श्रूयते ॥ ३ ॥ * **एवमवरोऽवरः परेषाम्**॥४॥ एवमनेन प्रकारेण अवरोऽवरः परेषां कीर्तिं स्वर्गं च वर्धयन्ति॥४॥ * **आभूतसम्प्लवात्ते स्वर्गजितः** ॥५॥ भूतसम्प्लवो महाप्रलयः । आ तस्मात्ते पुत्रिणस्स्वर्गजितो भवन्ति ते च ॥५॥ * **पुनस्सर्गे बीजार्थां भवन्तीति भविष्यत्पुराणे** ॥६॥ प्रलयानन्तरं सर्गः, तत्र संसारस्य बीजार्थाः प्रजार्थाः प्रजापतयो भवन्तीति भविष्यत्पुराणे श्रूयते ॥ ६ ॥ * **अथापि प्रजापतेर्वचनम्** ॥७॥ अपि च प्रजापतेरपि वाक्यमस्मिन्नर्थे भवति । गार्हस्थ्यमेव वरिष्ठमिति ॥७॥ * **त्रयीं विद्यां ब्रह्मचर्यं प्रजातिं श्रद्धां तपो यज्ञमनुप्रदानम् । य एतानि कुर्वते तैरित्सह स्मो रजो भूत्वा ध्वंसतेऽन्यत्प्रशंसन्निति** ॥८॥ त्रयी विद्यां त्रयाणां वेदानामध्ययनम् । ब्रह्मचर्यमष्टाचत्वारिंशदादिकम् । प्रजातिः प्रजोत्पादनम् । श्रद्धामास्तिक्यम् । तप उपवासादि । यज्ञमग्निहोत्रादिकं सोमयागान्तम् । अनुप्रदानम् अन्तर्वेदि बहिर्वेदि च दानम् । य एतानि कर्माणि कुर्वते, तैरित् तैरेव सह वयं स्मः त एवास्माकं सहायाः । अन्यत्तु ऊर्ध्वरेतसामाश्रमादिकं प्रशंसन् पुरुषो रजः पांसुर्भूत्वा ध्वंसते नश्यति । इतिशब्दो वचनसमाप्त्यर्थः । यथैव तर्हि शिष्टेषु वर्तमानाः पुत्राः पूर्वेषां कीर्तिं स्वर्गं च वर्धयन्ति, तथा प्रतिषिद्धेषु वर्तमाना अकीर्तिं नरकं च वर्धयेयुः ॥८॥ तत्राह— * **तत्र ये पापकृतस्त एव ध्वंसन्ति यथा पर्ण**

**वनस्पतेर्न परान् हिंसन्ति** ॥९॥ तत्र प्रजासन्ताने ये पापस्य कर्तारः, त एव ध्वंसन्ते न परान् पित्रादीन् हिंसन्ति । यथा यदेव पर्णं वनस्पतेः कीटादिभिर्दूषितं तदेव पतति न वनस्पतिं शाखान्तरं वा पातयति॥९॥तद्धेतमेवोपपादयति—***नास्यास्मिँल्लोके कर्मभिस्सम्बन्धो विद्यते तथा परस्मिन् कर्मफलैः** ॥१०॥ अस्येति सामान्यापेक्षमेकवचनम् । अस्य पित्रादेः पूर्वपुरुषस्य अस्मिन् लोके पुत्रकृतैः कर्मभिः सम्बन्धो न विद्यते । दृष्टान्तोऽयं यथा पुत्रकृतेषु कर्मसु पित्रादेः कर्तृत्वं नास्ति, तथा परस्मिन्नपि लोके कर्मफलैरपि सम्बन्धो नास्तीत्यर्थः ॥१०॥***तदेतेन वेदितव्यम्** ॥११। यदुक्तं ये पापकृतस्त एव ध्वंसन्ति न परान् हिंसन्तीति तदर्थं रूपमेतेन वक्ष्यमाणेन हेतुना वेदितव्यम् ॥११॥***प्रजापतेर्ऋषीणामिति सर्गोऽयम्**॥१२॥ प्रजापतेर्हिरण्यगर्भस्य ऋषीणां च मरीच्यादीनामयं सर्गो देवादिस्तिर्यगन्तः । ते चाध्वस्ता एव स्वे स्वे पदे वर्तन्ते । यदि च पुत्राः पापकृतः स्वयं ध्वंसमानाः परानपि ध्वंसयेयुः तदैतन्नोपपद्यते पुण्यकृतः सुखेनाद्यापि वर्तन्त इति ॥१२॥ अत्रोदाहरणमाह—***तत्र ये पुण्यकृतस्तेषां प्रकृतयः परा ज्वलत्य उपलभ्यन्ते** ॥१३॥ तत्र स्वर्गे ये पुण्यकृतो वसिष्ठादयस्तेषां प्रकृतयश्शरीराणि परा उत्कृष्टाः ज्वलत्यः दीप्यमाना उपलभ्यन्ते । दिवि यथा सप्तर्षिमण्डलम् । श्रूयते च 'सुकृतां वा एतानि ज्योतींषि यन्नक्षत्राणी'ति । इदमपि प्रमाणं न पुत्राणां ध्वंसे पूर्वेषां प्रध्वंस इति ॥१३॥ ***स्यात्तु कर्मावयवेन तपसा वा कश्चित्सशरीरोऽन्तवन्तं लोकं जयति सङ्कल्पसिद्धिश्च स्यान्न तु तज्ज्यैष्ठ्यमाश्रमाणाम्**॥१४॥कर्मावयवेन पूर्वार्जितानां कर्मणामेकदेशेन भुक्तशेषेण तपसा वा तीव्रेण कश्चिदूर्ध्वरेतास्सहशरीरेणान्तवन्तं लोकं जयतीति यत्तत् स्यात् । सम्भवेऽपि यच्च सङ्कल्पादेव सिद्धिस्स्यादिति, तदपि स्यात् न तु तदाश्रमाणां ज्यैष्ठ्यकारणमिति । तदेव 'मैकाश्रम्यं त्वाचार्या' इत्ययमेव पक्षः स्थापितः । अन्ये मन्यन्ते—सर्वे आश्रमा दूषिता भूषिताश्च । ततस्तेषु सर्वेषु यथोपदेशमव्यग्रो वर्तमानः क्षेमं गच्छतीत्येतदेव स्थितमिति ॥१४॥

**इति चतुर्विंशतितमी खण्डिका ॥ प्र०२ प०९ ख०२४ ॥**

**इति चापस्तम्बधर्मसूत्रवृत्तौ हरदत्तमिश्रविरचितायां उज्ज्वलायां द्वितीयप्रश्ने नवमः पटलः ॥९॥**

*व्याख्याताः सर्ववर्णानां साधारणवैशेषिका धर्मा राज्ञस्तु विशेषाद्वक्ष्यामः ॥१॥ उक्तवक्ष्यमाणसङ्कीर्तनं श्रोतृबुद्धिसमाधानार्थम् । अहिंसासत्यास्तेयादयः सर्ववर्णानां साधारणधर्माः । अध्ययनादयस्त्रयाणाम् । अध्यापनादयो ब्राह्मणस्य । युद्धादयः क्षत्रियस्य । कृष्यादयो वैश्यस्य । शुश्रूषा शूद्रस्य । राजा त्वभिषिक्तो विवक्षितः । तस्यैवहि वक्ष्यमाणं धर्मजातं सम्भवति । तस्य विशेषाद्विशेषतो यद्वक्तव्यं तद्वक्ष्यामः । विशेषानिति द्वितीयान्तपाठस्तु युक्तः ॥१॥* दक्षिणाद्वारं वेश्म पुरं च मापयेत् ॥२॥ वेश्म गृहं पुरं नगरं तदुभयमपि दक्षिणाद्वारं मापयेत् कारयेत् स्थपत्यादिभिः । दक्षिणपार्श्वे द्वारं यस्य तत्तथोक्तम् ॥ २ ॥ * अन्तरस्यां पुरि वेश्म ॥३॥ सर्वेषामेव प्राकाराणां मध्ये या पूस्तस्यामन्तरस्यां पुरि वेश्म मापयेदात्मनः ॥ ३ ॥* तस्य पुरस्तादावसथस्तदामन्त्रणमित्याचक्षते ॥४॥ तस्य वेश्मनः पुरस्तादावसथः कारयितव्यः । एत्य वसन्त्यस्मिन्नित्यावसथः आस्थानमण्डपः । तस्यामन्त्रणमिति संज्ञा ॥ ४ ॥* दक्षिणेन पुरं सभा दक्षिणोदग्द्वारा यथोभयं सन्दृश्येत बहिरन्तरं चेति॥५॥ दक्षिणेनेत्येनबन्तम् । पुरमिति 'एनपा द्वितीये'ति द्वितीयान्तम् । पुरस्य दक्षिणतः अदूरे सभा कारयितव्या । दक्षिणोदग्द्वारा दक्षिणस्यामुत्तरस्यां च दिशि द्वारे यस्यास्सा तथोक्ता । किमर्थमुभयत्र द्वारमिति चेत्, यद्बहिर्वृत्तं यच्चाभ्यन्तरं तदुभयमपि यथा सन्दृश्येतेत्येवमर्थमिति सैषा सभा । तस्यां द्यूतार्थिनः प्रविशन्तीति तदायस्थानं राज्ञः ॥५॥ * सर्वेष्वेवाजस्रा अग्नयस्स्युः ॥६॥ वेश्मन्यावसथे सभायामित्येतेषु सर्वेष्वेव स्थानेषु लौकिका अग्नयोऽजस्राः स्युः । अविच्छेदेन धार्याः ॥ ६ ॥ *अग्निपूजा च नित्या यथा गृहमेधे ॥७॥ तेषु चाग्निषु नित्यमग्निपूजा कार्या । यथा गृहमेधे औपासने सायंप्रातर्होम इत्यर्थः । मन्त्रावपि तावेव द्रव्यमपि तदेव ॥ ७ ॥ * आवसथे श्रोत्रियावरार्ध्यानतिथीन् वासयेत् ॥ ८॥ आवसथाख्ये स्थाने अतिथीन् वासयेत् । ते विशेष्यन्ते श्रोत्रियावरार्ध्यानिति । अवरपर्यायोऽवरार्ध्यशब्दः । यदि सर्वान्वासयितुं न शक्नोति

श्रोत्रियानपि तावद्वासयेदिति ॥ ८॥ ***तेषां यथागुणमावसथाः शय्यान्नपानं च विदेयम्** ॥९॥ तेषामतिथीनां यथागुणं विद्यावृत्तानुगुणमावसथादि देयं विशेषेण देयम् । आवसथा अपवरकादयः । शय्या खट्वादयः अन्नमोदनादि । पान तक्रादि सूपादि ॥ ९ ॥ ***गुरूनमात्यांश्च नातिजीवेत्** ॥ १० ॥ गुरवः पित्रादय. । अमात्या मन्त्रिणः । तान्नातिजीवेत् भक्ष्यभोज्याच्छादनादिषु तान्नातिशयीत ॥ १० ॥ *** न चास्य विषये क्षुधा रोगेण हिमातपाभ्यां वा सीदेदभावाद्बुद्धिपूर्वं वा कश्चित्** ॥११॥ अस्य राज्ञो विषये राष्ट्रे आहाराभावेन बुभुक्षया रोगेण व्याधिना हिमेन नीहारेण वर्षादीनामप्युपलक्षणमेतत् । आतपः आदित्यरश्मिताप. । एतैः प्रकारैरभावात् बुद्धिपूर्वं वा न कश्चिद्ब्राह्मणोऽप्यवसीदेत् अवसन्नो न स्यात् । राज्ञो ह्ययमपराधो यदाहाराद्यभावेन कश्चिदवसन्नः स्यात् । बुद्धिपूर्वं वेत्यत्रोदाहरणम्—यदा कश्चित् करमृणं वा दाप्यो भवति, तदा नासौ हिमातपयोरुपनिवेशयितव्यः भोजनाद्वा निरोद्धव्यः । तथा कुर्वाणं राजा दण्डयेदिति ॥ ११ ॥ ***सभाया मध्येऽधिदेवनमुद्धत्यावोक्ष्याक्षान्निवपेद्युग्मान् वैभीतकान् यथार्थान्** ॥१२॥ पूर्वोक्तायाः सभाया मध्ये अधिदेवन यस्योपरि कितवा अक्षैर्दीव्यन्ति तत्स्थानमधिदेवनम् । तत् पूर्वं काष्ठादिना उद्धन्ति उद्धत्यावोक्षति । अवोक्ष्य तत्राक्षान्युग्मसङ्ख्याकान्वैभीतकान् विभीतकवृक्षस्य विकारभूतान् यथार्थान् यावद्भिर्द्यूत निर्वर्तते, तावतो निवपति । कः ? यस्तत्र राज्ञा नियुक्तः । सहि को नाम ॥ १२ ॥ *** आर्याः शुचयस्सत्यशीला दीवितारस्स्युः** ॥१३॥ आर्याः द्विजातयः । शुचयोऽर्थशुद्धाः । सत्यशीलास्सत्यवादिनः । एवभूता एव पुरुषास्तत्र दीवितारः दीवितारः स्युः त एव तत्र दीव्येयुरित्यर्थः । तेच तत्र देवित्वा यथाभाषितं पाणिकं सभिकाय दत्वा गच्छेयुः । स च राज्ञे तमायमहरहः प्रतिमासं प्रतिसंवत्सरं दद्यात् । स एव च स्थानान्तरे दीव्यतो दण्डयेत् सभास्थाने च कलहकारान् । तत्र याज्ञवल्क्यः—'गच्छेदन्तिकवृद्धेस्तु सभिकः पञ्चकं शतम् । गृह्णीयाद्धूर्तकितवादितराद्दशकं शतम् ॥ स सम्यक्पालितो दद्याद्राज्ञे भाग यथाकृ-

तम् । जितमुद्राहयेज्जैत्रं दद्यात्सत्यं वचः क्षमम् ॥' इति ॥१३॥ * **आयुधग्रहणं नृत्तगीतवादित्राणीति राजाधीनेभ्योऽन्यत्र न विद्येरन्** ॥१४॥ आयुधग्रहणादीनि राजाधीनेभ्यो राजाश्रया ये पुरुषास्तेभ्योऽन्यत्र न विद्येरन् न भवेयु । उत्सवादिष्वन्यत्रापि भवत्याचारः ॥ १४ ॥ ***क्षेमकृद्राजा यस्य विषये ग्रामेऽरण्ये वा तस्करभयं न विद्यते** ।१५। यस्य राज्ञो विषये ग्रामेऽरण्ये च चोरभयं नास्ति स एव राजा क्षेमकृत् क्षेमङ्करः । न त्वन्यः शतं तुभ्यं शतं तुभ्यमिति ददानोऽपि ॥१५॥

इति पंचविंशतितमी खण्डिका ॥ प्र०२ प०१० ख०२५ ॥

---

***भृत्यानामनुपरोधेन क्षेत्रं वित्तं च ददद्ब्राह्मणेभ्यो यथार्हमनन्ताँल्लोकानभिजयति** ॥ १ ॥ भृत्यानामनुपरोधेन भृत्यवर्गस्य यथोपरोधो न भवति तथा ब्राह्मणेभ्यो यथार्हं विद्यावृत्ताद्यनुरूपं क्षेत्रं वित्तं च दद्यात् । एवं दददनन्ताँल्लोकानभिजयति ॥ १ ॥ * **ब्राह्मणस्वान्यपजिगीषमाणो राजा यो हन्यते तमाहुरात्मयूपो यज्ञोऽनन्तदक्षिण इति** ॥२॥ ब्राह्मणस्वानि चोरादिभिरपहृतानि अपजिगीषमाणः ब्राह्मणेभ्यो दानाय पजित्य ग्रहीतुमिच्छन् यो राजा युद्धे चोरैर्हन्यते तमाहुरात्मयूपोऽनन्तदक्षिणो यज्ञ इत्याहुर्धर्मज्ञाः। सङ्ग्रामो यज्ञः । तस्य आत्मा यूपस्थानीय आत्मेति शरीरमाह । अन्तरात्मा तु पशुस्थानीयः । प्रत्यानिनीषितं तु द्रव्यं दक्षिणा । सूत्रे कृतं यज्ञ इत्याहुरिति गौणो वादः ॥ २ ॥* **एतेनान्ये शूरा व्याख्याताः प्रयोजने युध्यमानास्तनुत्यजः** ॥ ३ ॥ प्रयोजनं चोरादिभिरपहृतानां ब्राह्मणस्वानां प्रत्यानयनादि, तदर्थं युध्यमाना ये शूरास्तनुत्यजो भवन्ति तेऽप्येतेन राज्ञा व्याख्याता आत्मयूपा यज्ञा अनन्तदक्षिणा इति ॥ ३ ॥* **ग्रामेषु नगरेषु चार्याञ्छुचीन् सत्यशीलान् प्रजागुप्तये निदध्यात्** ॥ ४ ॥ आर्याञ्छुचीन् सत्यशीलानिति व्याख्यातम् । एवंभूतान् पुरुषान् ग्रामेषु नगरेषु च प्रजानां रक्षणार्थं निदध्यात् नियुञ्जीत ॥ ४ ॥* **तेषां पुरुषास्तथागुणा एव स्युः** ॥५॥ तेषां नियुक्तानां ये पुरुषा नियोज्याः तेऽपि तथागुणा आर्यादिगुणा एव

स्युः ॥ ५ ॥* **सर्वतो योजनं नगरं तस्करेभ्यो रक्ष्यम्** ॥ ६ ॥ सर्वतः, सर्वासु दिक्षु योजनमात्रं नगरं तस्करेभ्यो रक्षणीयम् । रक्ष्यन्नित्ययमपपाठः ॥ ६ ॥* **क्रोशो ग्रामेभ्यः** ॥ ७ ॥ ग्रामेभ्यस्तु सर्वासु दिक्षु क्रोशो रक्ष्यः । ग्रामेभ्य इति 'यतश्चाध्वपरिमाण तत्र पञ्चमी वक्तव्ये'ति पञ्चमी ॥ ७ ॥ * **तत्र यन्मुष्यते तैस्तत्प्रतिपाद्यम्** ॥ ८ ॥ तत्र योजनमात्रे क्रोशमात्रे वा यन्मुष्यते चोर्यते ते नियुक्ताः स्वामिभ्यस्तत्प्रतिदद्यू राज्ञा तैस्तत् प्रतिदाप्य राजा तैः प्रतिदापयेदिति । प्रायेण दन्त्योष्ठ्यं वकारं पठन्ति ॥ ८ ॥ * **धार्म्यं शुल्कमपहारयेत्** ॥ ९ ॥ तत्र गौतमः—'विंशतिभागश्शुल्कः पण्ये इति यद्वणिग्भिर्विक्रियते हिङ्ग्वादि, तस्य विंशतितमं भागं राजा गृह्णीयात् । तस्य शुल्क इति संज्ञा । एष धर्म्यश्शुल्कः । तमधिकृतैरेव हारयेत् ग्राहयेदिति । मूलादिषु विशेषस्तेनैवोक्तः । मूलफलपुष्पौषधिमधुमांसतृणेन्धनानां षाष्टिक्यमिति ॥ ९ ॥ * **अकरः श्रोत्रियः** ॥ १० ॥ श्रोत्रियः करं न दाप्य । अन्ये दाप्याः ॥ १० ॥ * **सर्ववर्णानां च स्त्रियः** ॥ ११ ॥ अकराः । वर्णग्रहणात् प्रतिलोमादिस्त्रियो दाप्याः ॥ ११ ॥* **कुमाराश्च प्राक् व्यञ्जनेभ्यः** ॥ १२ ॥ व्यञ्जनानि श्मश्र्वादीनि । यावत्तानि नोत्पद्यन्ते तावदकराः ॥ १२ ॥* **ये च विद्यार्था वसन्ति** ॥ १३ ॥ विद्यामुद्दिश्य ये गुरुषु वसन्ति ते जातव्यञ्जना अपि असमाप्तवेदा अकराः ॥ १३ ॥ ***तपस्विनश्च ये धर्मपराः** ॥ १४ ॥ धर्मपरा इति किं ? ये अभिचारकामा मन्त्रसिद्ध्यै तपस्तप्यन्ते ते अकरा माभूवन्निति ॥ १४ ॥ ***शूद्रश्च पादावनेक्ता** ॥ १५ ॥ यस्त्रैवर्णिकानां पादावनेक्ता स शूद्रोऽप्यकरः ॥ १५ ॥ * **अन्धमूकबधिररोगाविष्टाश्च** ॥ १६ ॥ एतेऽप्यकरा यावदान्ध्यादि ॥ १६ ॥ * **ये व्यर्था द्रव्यपरिग्रहैः** ॥ १७ ॥ ये च परिव्राजकादयः द्रव्यपरिग्रहैर्व्यर्था निष्प्रयोजनाः शास्त्रतो येषां द्रव्यपरिग्रहः प्रतिषिद्धः तेऽप्यकराः । तथा च वसिष्ठः—'अकरः श्रोत्रियो राजा पुमाननाथः प्रव्राजितो बालवृद्धतरुणप्रशान्ता' इति ॥ १७ ॥ * **अबुद्धिपूर्वमलङ्कृतो युवा परदारमनुप्रविशन् कुमारीं**

**वा वाचा बाध्यः** ॥१८॥ यत्र परदारा आसते कुमारो वा पतिंवरा, तत्र युवा अलङ्कृतः अबुद्धिपूर्वमज्ञानादनुप्रविशन् वाचा बाध्यः अत्रेयमास्ते माऽत्र प्रविक्ष इति॥ १८॥ * **बुद्धिपूर्वे तु दुष्टभावो दण्ड्यः** ॥१९॥ यस्तु जानन्नेव दुष्टभावः प्रलोभनार्थी प्रविशति स दण्ड्यो द्रव्यानुरूपमपराधानुरूपं च। दुष्टभावग्रहणमाचार्याभिप्रेषितस्य प्रवेशे दण्डो माभूदिति॥ १९॥ * **सन्निपाते वृत्ते शिश्नच्छेदनं सवृषणस्य** ॥२०॥ सन्निपातो मैथुनं तस्मिन् वृत्ते शिश्नच्छेदनं दण्डः। सवृषणस्येत्युपसर्जनस्यापि शिश्नस्य विशेषणम्। सवृषणस्य शिश्नस्य छेदनमिति ॥२०॥ * **कुमार्यां तु स्वान्यादाय नाश्यः** ॥२१॥ कुमार्यां तु सन्निपाते वृत्ते सर्वस्वहरणं कृत्वा देशान्निर्वास्य न शिश्नच्छेदः॥ २१॥ * **अथ भृत्ये राज्ञाम्** ॥ २२॥ अथ सन्निपातात्प्रभृति ते परदारकुमार्यौ राज्ञा भृत्ये ग्रासाच्छादनप्रदानेन भर्तव्ये॥ २२॥ * **रक्ष्ये चात ऊर्ध्वं मैथुनात्** ॥ २३॥ अथ प्रथमात् सन्निपातात् ऊर्ध्वं मैथुनाच्च रक्ष्ये यथा मैथुनं नाचरतस्तथा कार्ये ॥२३॥ * **निर्वेषाभ्युपाये तु स्वामिभ्योऽवसृजेत्** ॥२४॥ यदि ते एव निरुद्धे निर्वेषणमभ्युपेतः अभ्युपगच्छतः तदा निर्वेषाभ्युपाये तु स्वामिभ्यस्ते अवसृजेत् दद्यात्। परदारं भर्त्रे श्वशुराय वा कुमारीं पित्रे भ्रात्रे वा। अनभ्युपगमे तु प्रायश्चित्तस्य यावज्जीवं निरोधः॥ २४॥

**इति षड्विंशतितमी खण्डिका** ॥प्र०२ प०१० ख० २६॥

---

* **चरिते यथापुरं धर्माद्धि सम्बन्धः** ॥ १॥ चरिते तु निर्वेषे यथापुरं यथापूर्वं धर्मात् तृतीयार्थे पञ्चमी। धर्मेण सम्बन्धो भवति। हिशब्दो हेतौ। यस्मादेवं तस्मात् अवश्यं प्रायश्चित्तं कारयितव्ये। यज्ञविवाहादौ न कश्चिद्दोष इति ॥१॥ परदारप्रसङ्गादुच्यते— * **सगोत्रस्थानीयान्न परेभ्यस्समाचक्षीत** ॥२॥ योऽनपत्य आत्मनश्शक्त्यभावं निश्चित्य क्षेत्रजं पुत्रमिच्छन् भार्यां परस्मै नियुङ्क्ते मृते वा तस्मिन् तत्पित्रादयस्संतानकाङ्क्षिणस्तद्विषयमेतत्। कुलान्तरगतप्रविष्टा सगोत्रस्था

नीया। सा हि पूर्वं पितृगोत्रा सती भर्तृगोत्रा धर्मैरभिक्रियते । अतः भर्तृपक्ष्याणां सगोत्रस्थानीया भवति । भर्ता तु साक्षात्सगोत्रः । तां सगोत्रस्थानीयां न परेभ्योऽसगोत्रेभ्यस्समाचक्षीत । इयमनपत्या अस्यामपत्यमुत्पाद्यतामिति सगोत्रायैव तु समाचक्षीत । तत्रापि देवराय तदभावे सपिण्डेभ्यः ॥२॥ कः पुनस्सगोत्रस्य विशेषस्तमाह— * **कुलाय हि स्त्री प्रदीयत इत्युपदिशन्ति** ॥ ३ ॥ हि यस्मात् स्त्री कन्या प्रदीयमाना कुलायैव प्रदीयत इत्युपदिशन्ति धर्मज्ञाः । तस्मात् सगोत्रायैव समाचक्षीतेति ॥३॥ तमिमं नियोगं दूषयति— * **तदिन्द्रियदौर्बल्याद्विप्रतिपन्नम्** ॥४॥ यद्यप्येवं पूर्वे कृतवन्तः, तथापि तदद्यत्वे विप्रतिपन्नं विप्रतिषिद्धम् । कुतः इन्द्रियदौर्बल्यात् । दुर्बलेन्द्रिया ह्यद्यत्वे मनुष्याः । ततश्च शास्त्रव्याजेनापि भर्तृव्यतिक्रमेऽतिप्रसङ्गस्स्यादिति ॥४॥ सगोत्रविषयेऽपि यो विशेषस्सोऽपि नास्तीत्याह— * **अविशिष्टं हि परत्वं पाणेः** ॥ ५ ॥ येन पाणिना पूर्वमग्निसाक्षिकं पाणिर्गृहीतः कन्यायाः, तस्मात् पाणेरन्यो भवति । सगोत्रस्यापि पाणिर्यस्मादेवं पाणेः परत्वमविशिष्टं समानं, तस्मादविशेष इति । अवशिष्टमित्यपपाठः ॥ ५ ॥ पाणिरन्यो भवतु, को दोषः * **तद्व्यतिक्रमे खलु पुनरुभयोर्नरकः** ॥ ६ ॥ तस्य पाणेर्व्यतिक्रमे उभयोर्दम्पत्योः नरको भवति । खलु पुनरिति प्रसिद्धिद्योतकौ निपातौ । अतः पत्यापि न स पाणिस्त्याज्यः। यः पूर्वं गृहीतः भार्ययापि, न स पाणिस्त्याज्यः। येन पूर्वमात्मनः पाणिः गृहीतः ॥६॥* **नियमारम्भणो हि वर्षीयानभ्युदय एवमारम्भणादपत्यात्** ॥७॥ पत्या आरभ्यतेऽनेनेत्यारम्भणः योऽयं दम्पत्योः परस्परनियमः, स आरम्भणो यस्य स नियमारम्भणः । एवंभूतो योऽभ्युदयस्स एव वर्षीयान् वृद्धतरः । कस्मात् वर्षीयान् एवमुक्तप्रकारेण नियोगलक्षणेन यदपत्यमारभ्यते तस्मादेवमारम्भणादपत्याद्वर्षीयानिति । अपत्यादिति पाठः । आपत्यादिति प्रायेण पठन्ति ॥७॥ * **नाश्य आर्यश्शूद्रायाम्** ॥ ८ ॥ आर्यस्त्रैवर्णिकः शूद्रायां परभार्यायां प्रसक्तो राज्ञा राष्ट्रान्नाश्यः निर्वास्यः ॥ ८ ॥ * **वध्यश्शूद्र आर्यायाम्** ॥ ९ ॥ शूद्रस्तु त्रैवर्णिकस्त्रियां प्रसक्तो वध्यः । एतच्च योऽन्तःपुरादिष्वधिकृतो रक्षकस्सन्

स्वयं गच्छति, तस्य भवति। अन्यस्य तु पूर्वोक्तं शिश्नच्छेदनमेव। तथा च शूद्राधिकारे गौतमः—'आर्यस्त्र्यभिगमने लिङ्गोद्धारं स्वहरणं च गोप्ता चेद्वधोऽधिक' इति। याज्ञवल्क्येन तु प्रातिलोम्येन गमनमात्रे वध उक्तः—'सजातावुत्तमो दण्ड्यः आनुलोम्ये तु मध्यमः। प्रातिलोम्ये वधः पुंसां स्त्रीणां नासादिकृन्तनम् ॥' इति। सोऽनुबन्धाभ्यासाद्यपेक्षो द्रष्टव्यः। तथा 'नाश्य आर्यश्शूद्रायामि'त्याचार्यवचनमप्यभ्यासापेक्ष ब्राह्मणादेः क्रमविवाहे या शूद्रा, तद्विषयं वा द्रष्टव्यम् ॥९॥ *दारं चास्य कर्शयेत् ॥ १० ॥ अस्य शूद्रस्य या दारभूता तेन भुक्ता त्रैवर्णिकस्त्री तां च कर्शयेत्। व्रतनियमोपवासैः या प्रजाता न भवति तद्विषयमेतत्। 'ब्राह्मणक्षत्रियविशां स्त्रियः शूद्रेण सङ्गताः। अप्रजाता विशुध्यन्ति प्रायश्चित्तेन नेतराः ॥' इति स्मरणात् ॥ १० ॥ *सवर्णायामन्यपूर्वायां सकृत्सन्निपाते पादः पततीत्युपदिशन्ति ॥ ११ ॥ अन्यः पूर्वः पतिः यस्यास्सा अन्यपूर्वा परभार्या तस्यां सवर्णायां सकृद्गमने पादः पतति। पतितस्य द्वादशवार्षिकं प्रायश्चित्तं तस्य तुर्योऽशस्त्रीणि वर्षाणि प्राकृतं ब्रह्मचर्यमस्य प्रायश्चित्तम्। एतच्च श्रोत्रियभार्यायामृतुकाले कामतः प्रथमं दूषकस्य। तत्र गौतमः—'द्वे परदारे त्रीणि श्रोत्रियस्ये'ति ॥ ११ ॥ *एवमभ्यासे पादः पादः ॥ १२ ॥ एवमभ्यासे प्रत्यभ्यासं पादः पादः पतति ॥ १२ ॥ अतः *चतुर्थे सर्वम् ॥ १३ ॥ चतुर्थे सन्निपाते सर्वमेव पतति। ततश्च पूर्णद्वादशवार्षिकं कर्तव्यम्। तृतीये नव वर्षाणि। द्वितीये षड्वर्षाणि। एतच्च प्रतियोगं स्त्रीभेदेन प्रथमदूषकस्य। एकस्यामेव त्वभ्यासे कल्प्यम्। तत्र 'यत् पुंसः परदारेषु तच्चैनां चारयेद्व्रतमि'ति स्मरणात्। स्त्रिया अपि प्रतियोगं पादः पादः पतति तदनुरोधेन कल्प्यम् ॥ १३ ॥ *जिह्वाच्छेदनं शूद्रस्यार्यं धार्मिकमाक्रोशतः ॥ १४ ॥ शूद्रो द्विजातीनामन्यतमं धार्मिकं स्वकर्मस्थं यद्याक्रोशति निन्दति गर्हते, तदा तस्य जिह्वा छेत्तव्येति। मनुस्तु सामान्येनाह—'येनाङ्गेनावरो वर्णो ब्राह्मणस्यापराध्नुयात्। तदङ्गं तस्य छेत्तव्यं तन्मनोरनुशासनम् ॥' गौतमस्तु—'शूद्रो द्विजातीनभिसन्धायाभिहत्य च दण्डपारुष्याभ्यामङ्गं मोच्यो येनोपहन्या'दिति ॥ १४ ॥ *वाचि पथि शय्यायामा

**सन इति समभिभवतो दण्डताडनम्** ॥ १५ ॥ यस्तु शूद्रो वागादिष्वार्यै-स्समीभवति न तु न्यग्भूतः तस्य दण्डेन ताडनं कर्तव्यम् । स दण्डेन ताड-यितव्यः । अयमस्य दण्डः ॥ १५ ॥ ***पुरुषवधे स्तेये भूम्यादान इति स्वान्यादाय वध्यः** ॥१६ ॥ भूम्यादानं परक्षेत्रस्य बलात्स्वीकारः, पुरु-षवधादिषु निमित्तेषु शूद्रस्सर्वस्वहरणं कृत्वा पश्चाद्वध्यः मारयितव्यः॥१६॥ ***चक्षुर्निरोधस्त्वेतेषु ब्राह्मणस्य** ॥ १७ ॥ ब्राह्मणस्य त्वेतेषु निमित्तेषु चक्षुषोर्निरोधः कर्तव्यः । पट्टबन्धादिना चक्षुषी निरोद्धव्ये यथा यावज्जी-व न पश्यति । न तूत्पाटयितव्ये । न शारीरो ब्राह्मणदण्डः । अक्षतो ब्राह्मणो व्रजे'दिति स्मरणात् । चक्षुनिरोध इति रेफलोपश्छान्दसः ॥ १७॥ ***नियमा-तिक्रमिणमन्यं वा रहसि बन्धयेत्** ॥१८॥ यो वर्णाश्रमप्रयुक्तान्नियमा-नतिक्रामति त नियमातिक्रमिणमन्यं वा प्रतिषिद्धानां कर्तारं रहसि बन्धयेत् निगलितं निरुन्ध्यात् ॥१८॥ ***आसमापत्तेः** ॥ १९ ॥ यावदसौ नियमान् प्रतिपत्स्ये प्रतिषिद्धेभ्यो निवर्तिष्य इति ब्रूयात् ॥ १९ ॥ ***असमापत्तौ नाश्यः** ॥२०॥ यद्यसौ दीर्घकाल निरुद्धोऽपि न समापद्येत, ततो नाश्यः निर्वास्यः ॥ २०॥ ***आचार्यर्त्विक्स्नातको राजेति त्राणं स्युरन्यत्र वध्यात्** ॥२१॥ यदि दण्डे प्रवृत्तं राजानमाचार्यो ब्रूयात् अहमेनमतःपरं वार यिष्यामि मुच्यतामयमिति । अतोऽङ्गदण्डे प्राप्तेऽर्थदण्डमर्थदण्डे प्राप्ते ताडनं ताडने प्राप्ते धिग्दण्डमिति कृत्वा तद्वशे विसृजेत् । एवमृत्विजि । ऋत्विगाचा-र्यौ राज्ञस्स्वभूतौ न दण्ड्यस्य । स्नातको विद्यावृत्ताभ्याम् । राजा अनन्तरादिः । सर्व एत राज्ञस्सम्मान्याः । अतस्ते दण्ड्यस्य त्राणं स्युः । उक्तेन प्रकारेण रक्षका भवेयुः । नान्यः कश्चित् । तेऽप्यन्यत्र वध्यात् यस्य वधानुगुणोऽ-पराधः न तस्याचार्यादयोऽपि त्राणम् । हन्तव्य एव स इति॥ २१ ॥

सप्तविंशतितमी खण्डिका ॥ प्र०२ प०१० ख०॥२७॥

इति चापस्तम्बधर्मसूत्रवृत्तौ हरदत्तमिश्रविरचितायाम्

उज्ज्वलायां द्वितीयप्रश्ने दशमः पटलः ॥१०॥

---

*** क्षेत्रं परिगृह्योत्थानाभावात्फलाभावे यस्समृद्धस्स भावि तदपहार्यः ॥१॥** वैश्यो वैश्यवृत्तिर्वा परस्य क्षेत्रं कृष्यर्थं परिगृह्य उत्थानं कृषिविषयं यत्नं न कुर्यात् तदभावाच्च फलं न स्यात् तत एतस्मिन्निमित्ते स कर्षकस्समृद्धश्चेत्तस्मिन् भोगे यत्तद्भाविफलं तदपहार्यः, अपहारयितव्यः । राज्ञा क्षेत्रस्वामिने दाप्यः ॥१॥ *** अवशिनः कीनाशस्य कर्मन्यासे दण्डताडनम् ॥२॥** कीनाशः कर्षकः ; तस्यावशिनः स्वतन्त्रस्य निर्धनस्य दासस्य कर्मन्यासे स चेत् कृषिकर्म न्यसेत् विच्छिन्द्यात् तस्य दण्डेन ताडनं कर्तव्यं स दण्डेन ताडयितव्यः । अर्थाभावान्नार्थदण्डः । अपर आह—अवशी अवश्यः अविधेयः यः क्षेत्रं परिगृह्यावशिनः कीनाशस्य कृषिकर्म न्यसेत् न स्वयं कुर्यात, तदा स परिग्राहको दण्डेन ताडयितव्य इति । यदि वा अवशिन इति बहुव्रीहिः । यस्य कीनाशस्य वशी स्वतन्त्रः क्षेत्रवान्नास्ति, स यदि पूर्वकृष्टस्य क्षेत्रस्य कृषिकर्म न्यसेत् न कुर्यात् तस्य दण्डताडनं दण्ड इति राजपुरुषस्योपदेशः ॥२॥ *** तथा पशुपस्य ॥३॥** पशुपो गोपालः तस्यापि कर्मन्यासे पालनस्याकरणे दण्डेन ताडनं दण्डः ॥३॥ *** अवरोधनं चास्य पशूनाम् ॥४॥** ये चास्य पशवो रक्षणाय समर्पितास्तेषां चावरोधनमपहरणं कर्तव्यमन्यस्य गोपस्य समर्पणीया इति ॥४॥ *** हित्वा व्रजमादिनः कर्शयेत्पशून् ॥५॥** ये पशवो व्रजे गोष्ठे निरुद्धास्तं व्रजं हित्वा आदिनस्सस्यादेर्भक्षयितारो भवन्ति, तान् कर्शयेत बन्धनादिना कृशान् कुर्यात् । कः यत् भक्षितं तद्वान्; राजपुरुषो वा ॥५॥ *** नातिपातयेदवरुध्य पशून्मारणे नाशने वा स्वामिभ्योऽवसृजेत् ॥६॥** नातिनिरोधं कुर्यात् न ताडयेद्वेति । अवसृजेत् यदि पशुपः पशूनवरुध्य पालयितुं गृहीत्वा सभयस्थाने विसृज्योपेक्षया मारयेत् नाशयेद्वा । नाशनं चोरादिभिरपहरणम् । स्वामिभ्यः पशूनवसृजेत प्रत्यर्पयेत् । पश्वभावे मूल्यम् ॥६॥ *** प्रमादादरण्ये पशूनुत्सृष्टान् दृष्ट्वा ग्राममानीय स्वामिभ्योऽवसृजेत् ॥७॥** यदि स्वामिनः प्रमादादरण्ये पशूनुत्सृजेयुः वनपालकेन ततस्तान् दृष्ट्वा ग्राममानीय स्वामिभ्यः अर्पयेत् । कः यस्तत्र रक्षकत्वेन राज्ञा नियुक्तः ॥७॥ *** पुनः प्रमादे**

**सकृदवरुध्य** ॥८॥ पुनः प्रमादादुत्सृष्टेषु सकृदवरुध्य स्वामिभ्योऽवसृजेत् ॥८॥ ***तत ऊर्ध्वं न सृक्षेत्** ॥९॥ ततो द्वितीयात् प्रयोगादूर्ध्वं ग्राममानीयेत्यादि यदुक्तं तन्न सृक्षेत् नाद्रियेत तस्मिन् विषये उपेक्षेत ॥९॥ ***परपरिग्रहमविद्वानाददान एधोदके मूले पुष्पे फले गन्धे ग्रासे शाक इति वाचा बाध्यः** ॥१०॥ एधाश्चोदकं च एधोदकम्। ग्रासो गवाद्यर्थो यवसादिः। सर्वत्र विषयसप्तमी। यः परपरिग्रहोऽयमित्यविद्वानजानन् एधादिमादत्ते गृह्णाति, स तस्मिन्विषये तत्र नियुक्तेन राजपुरुषेण निष्ठुरया वाचा बाध्यः निवार्यः ॥१०॥ ***विदुषो वाससः परिमोषणम्** ॥११॥ यस्तु विद्वानेवादत्ते तस्य वाससोऽपहारः कर्तव्यः ॥११॥ ***अदण्ड्यः कामकृते तथा प्राणसंशये भोजनमाददानः** ॥१२॥ तथाशब्दस्य भोजनमित्यनेन सम्बन्धः। प्राणसंशयदशायामेधोदकादेरादाने कामकृतेऽप्यदण्ड्यः। तथा भोजनमप्याददानः प्राणसंशये न दण्ड्य इति ॥१२॥ ***प्राप्तनिमित्ते दण्डाकर्मणि राजानमेनस्स्पृशति** ॥१३॥ प्राप्तं दण्डनिमित्तं यस्य तस्मिन् पुरुषे दण्डाकर्मणि दण्डस्याक्रियायां यदि दयया लोभेन वा प्राप्तदण्डं न कुर्यात् तदा तदेनो राजानमेव स्पृशति ॥१३॥

**इति अष्टाविंशतितमी खण्डिका ॥ प्र०२ प०११ ख०२८ ॥**

---

ननु शास्त्रफलं प्रयोक्तरि, तत्कथमन्यकृतमेनोऽन्यं स्पृशतीति, बहुविधत्वात् कर्तृभेदस्येत्याह—***प्रयोजयिता मन्ता कर्तेति स्वर्गनरकफलेषु कर्मसु भागिनः** ॥१॥ धर्ममधर्मं वा प्रकुर्वाणं यः प्रयुङ्क्ते इदमित्थं कुर्विति स प्रयोजयिता। स चानेकप्रकारः। आज्ञापकोऽभ्यर्थयिता अनुग्राहक इति। भृत्यादेर्निकृष्टस्य प्रवर्तना आज्ञा। गुर्वादेराराध्यस्य प्रवर्तनाभ्यर्थना। अनुग्रहो द्विविधः उपदेशस्तत्सधर्माचरणं चेति। तत्र य इत्थमर्थमुपदिशति त्वं शत्रुमित्थं व्यापादय धर्मार्जनेऽयं तेऽभ्युपाय इति स उपदेष्टा। यः पुनः केनचिज्जिघांसितं पलायमानं वा निरुणद्धि निरुद्धश्च हन्यते स निरोद्धानुग्राहकः। मन्ता अनुमन्ता यस्यानुमतिमन्तरेणार्थो न निवर्तते स राजादिको धर्माधर्मयोरनुमन्ता। कर्ता सा-

क्षात्क्रियाया निर्वर्तकः । एते त्रयोऽपि स्वर्गफलेषु नरकफलेषु च कर्मसु धर्मेष्वधर्मेषु च भागिनः फलस्यांशभागिनः फलस्यांशभाजः । सर्वेषां च यथाकथंचित् कर्तृत्वम् ॥ १ ॥ यद्यप्येवम् ***यो भूय आरभते तस्मिन् फलविशेषः** ॥ २ ॥ तेषु प्रयोजकादिषु यो भूय आरभते । यस्य व्यापारोऽर्थनिर्वर्तनावधिकमुपयुज्यते, तस्मिन् फलविशेषो भवति ॥ २ ॥ ***कुटुम्बिनौ धनस्येशाते** ॥ ३ ॥ कुटुम्बिनौ दम्पती । तौ धनस्य परिग्रहे विनियोगे च ईशाते । यद्यप्येव, तथापि भर्तुरनुज्ञया विना स्त्री न विनियोक्तुं प्रभवति । भर्ता तु प्रभवति । तदेतेन वेदितव्यं 'न हि भर्तुर्विप्रवासे नैमित्तिके दाने स्तेयमुपदिशन्ती'ति ॥ ३ ॥ ***तयोरनुमतेऽन्येऽपि तद्धितेषु वर्तेरन्** ॥ ४ ॥ तयोरनुमतेऽनुमतौ सत्यामन्येऽपि पुत्रादयः तयोरैहिकेषु आमुष्मिकेषु च हितेषु वर्तेरन् द्रव्यविनियोगेनापि ॥ ४ ॥ ***विवादे विद्याभिजनसम्पन्ना वृद्धा मेधाविनो धर्मेष्वविनिपातिनः** ॥ ५ ॥ अर्थिप्रत्यर्थिनोर्विप्रतिषिद्धो वादो विवादः । तत्र विद्यादिगुणसंयुक्ता निर्णेतारस्स्युरिति वाक्यशेषः । विद्या अध्ययनसम्पत् अध्ययनसहितं शास्त्रज्ञानं वा । अभिजनं कुलशुद्धिः । वृद्धाः परिणतशिरसः । मेधाविनः ऊहापोहकुशलाः । धर्मेषु वर्णाश्रमप्रयुक्तेषु अविनिपातिनः । विनिपातः प्रमादः तद्रहिताः ॥५॥ ***सन्देहे लिङ्गतो दैवेनेति विचित्य** ॥६॥ ते च निर्णयन्तस्सन्देहस्थलेषु लिङ्गतोऽनुमानेन दैवेन तप्तमाषादिना। इतिशब्दः प्रकारे। यच्चान्यदेवं युक्तं वचनं व्याघातादि तेन च विचित्यार्थस्थितिमन्विष्य निर्णेतारस्स्युरित्यध्याहृतेन वाक्यपरिसमाप्तिः ॥६॥ अथ साक्ष्यविधिः—***पुण्याहे प्रातरग्नाविद्धेऽपामन्ते राजवत्युभयतस्समाख्याप्य सर्वानुमते मुख्यस्सत्यं प्रश्नं ब्रूयात्** ॥ ७ ॥ पुण्याहो देवनक्षत्रं प्रातर्मध्याह्नादिषु अग्नाविद्धे अग्निमिद्ध्वा तत्समीपे अपामन्ते उदकमुपनिधाय तत्समीपे राजवति राजाधिष्ठिते सदसि । राजग्रहणं प्राड्विवाकादेरुपलक्षणम् । उभयतः उभयोरर्थिप्रत्यर्थिनोस्समाख्याप्य किमहं युवयोः प्रमाणभूतः साक्षीत्यात्मानं ख्यापयित्वा । यद्वा उभयतः उभयोरपि पक्षयोस्सत्यवचने च असत्यवचने च साक्षिणो यद्भाविफलं तत्सत्यं ब्रू-

ह्यनृतं त्यक्त्वा सत्येन स्वर्गमेष्यास । अनृतेन महाघोरं नरकं प्रतिपत्स्यसे इत्यादिना प्रकारेण समाख्याप्य प्राड्विवाकादिभिः पृष्ट इति शेषः । सर्वानुमते अर्थिप्रत्यर्थिनोस्सभ्यानां चानुमतौ सत्या सभ्यो· मुख्यः साक्षिगुणैरुपेतो दोषैश्च वर्जितस्साक्षी प्रश्नं पृष्टमर्थं सत्यं यथात्मना ज्ञातं तथा ब्रूयात्॥७॥ *अनृते राजा दण्डं प्रणयेत् ॥८॥ साक्षिणानृतमुक्तमिति प्रतिपन्ने राजा तं दण्डयेत् । अत्र मनुः—'यस्य दृश्येत सप्ताहादुक्तसाक्ष्यस्य साक्षिणः । रोगोऽग्निर्ज्ञातिमरणं दाप्यो दण्ड च तत्समम् ॥' इति॥८॥ न केवलमसत्यवचने राजदण्डः, किं तर्हि—*नरकश्चात्राधिकः साम्पराये ॥९॥ साम्परायः परलोकः । तत्र नरकश्च भवति न तु 'राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवा । निर्मलास्स्वर्गमायान्ति सन्तस्सुकृतिनो यथे'त्यस्यायं विषय इति ॥९॥ *सत्ये स्वर्गस्सर्वभूतप्रशंसा च ॥१०॥ सत्य उक्ते स्वर्गो भवति । सर्वाणि च भूतान्येनं प्रशंसन्ति अपि देवाः ॥१०॥ *सा निष्ठा या विद्या स्त्रीषु शूद्रेषु च ॥११॥ स्त्रीषु शूद्रेषु च या विद्या सा निष्ठा समाप्तिस्तस्यामप्यधिगतायां विद्याकर्म परितिष्ठतीति ॥११॥ *आथर्वणस्य वेदस्य शेष इत्युपदिशन्ति ॥१२॥ अथर्वणा प्रोक्तमधीयते ये ते आथर्वणिकाः । वसन्तादिभ्यष्ठक् । तेषा समाम्नाय आथर्वणः । आथर्वणिकस्येकलोपः आथर्वणः । तस्य वेदस्य शेष इत्युपदिशन्ति धर्मज्ञाः । या विद्या स्त्रीषु शूद्रेषु चेति ॥१२॥ *कृच्छ्रा धर्मसमाप्तिस्समाम्नानेन लक्षणकर्मणा तु समाप्यते ॥१३॥ समाम्नानं प्रतिपदपाठः । तेन धर्मसमाप्तिः कृच्छ्रा न शक्या कर्तुम् । किं तु लक्षणकर्मणा समाप्यते येन सामान्येन न भिन्नानामधिगमो भवति तल्लक्षणं, तस्य कर्मणा करणेन समाप्यते । कर्मणात्त्विति द्वितकारपाठोऽयमार्षः । आदिति वा निपातस्य प्रश्लेषः । स च सत्यइत्यस्यार्थे द्रष्टव्यः ॥१३॥ *तत्र लक्षणं सर्वजनपदेष्वेकान्तसमाहितमार्याणां वृत्तं सम्यग्विनीतानां वृद्धानामात्मवतामलोलुपानामदाम्भिकानां वृत्त सादृश्यं भजेत । एवमुभौ लोकावभिजयति ॥१४॥ पूर्वेण गतम् ॥१४॥ *स्त्रीभ्यस्सर्ववर्णेभ्यश्च धर्मशेषान्प्रतीयादित्येक इत्येके ॥१५॥ उक्तव्यतिरिक्ता ये धर्मा धर्मशेषास्तान् स्त्र्यादीनामपि सकाशात् प्रतीया-

दित्येके मन्यन्ते । ते च प्रतिजनपदं प्रतिकुलं च भिन्नास्तथैव प्रतिपत्तव्याः। तत्र द्रमिडाः कन्यामेषस्थे सवितर्यादित्यपूजामाचरन्ति। भूमौ मण्डलमालिख्येत्यादीन्युदाहरणानि । द्विरुक्तिरध्यायपरिसमाप्त्यर्था ॥ १५ ॥

इति एकोनत्रिंशत्तमी खण्डिका ॥ प्र०२ प०११ ख०२९ ॥

इति चापस्तम्बधर्मसूत्रवृत्तौ हरदत्तमिश्रविरचितायाम्

उज्ज्वलायां द्वितीयप्रश्ने एकादशः पटलः ॥ ११ ॥

## ॥ द्वितीयप्रश्नश्च समाप्तः ॥

---

## आपस्तम्बधर्मसूत्रमुज्ज्वलासहितं समाप्तिमगात्

## शुभमस्तु

शिवाभ्यां नमः ।

॥ श्रीः ॥

॥ शिवाभ्यां नमः ॥

इदं

श्रीमदापस्तम्बमहर्षिप्रणीतं

# ॥ धर्मसूत्रम् ॥

आर्षप्रबन्धव्याख्यालङ्कर्मीणधिषण श्रीमद्धरदत्तमिश्रविरचितया

## उज्ज्वलाख्यया वृत्त्या

संवलितं

श्रीमद्गौरीमायूरदक्षिणपार्श्वस्थहट्टीरचोळनदीदक्षिणतीरमण्डनायि-
ताचलकुट्टिसमाख्याग्रहाराभिजनेन श्रीमद्वाधूलवंशमुक्ता-
फलश्रीमद्रङ्गनाथसुधीमणेः पौत्रेण राजशास्त्रिप्रथ-
नामकश्रीमन्मृत्युञ्जयसुधीमणेः चरमेण
तनुभुवा वृद्धाम्बिकागर्भजन्मना श्री-
कुम्भघोणनगरविराजमानस्वदेश-
भूषणवाणीपाठशालागीर्वाण-
वाण्युपाध्यायपदमाध-
तिष्ठता

## रा० हालास्यनाथशास्त्रिणा

षट्का प्राक्तनीस्समर्प्य सम्यक्संशोध्य
स्थूलाक्षरं पारायणोपयोगिनमापस्तम्बधर्मसूत्रपाठं
संयोज्य च

कुम्भघोणस्थश्रीविद्यामद्राक्षरशालायां
मुद्राक्षरैरङ्कयित्वा प्राकाश्यं नीतं

समुन्मिषति तमाम् ।
कल्यब्दाः ४९९६ ।

TO

JAGAD GURU

SRIMAT SACHCHIDANANDA SIVABHINAVA

NARASIMHA BHARATI SWAMI

OF

SRINGARI

This work is dedicated

BY

THE EDITOR

R. HALASYANATHA SASTRY

श्रीशारदाम्बायै नमः ।

# अयं प्रबन्धः

अखिलभूमण्डलमण्डनायमानतुंगभद्रातरंगशिशिरीकृत परिसरश्रीमच्छृंगगिरिक्षेत्रावराजमानश्रीमच्छंकरभगवत्पाद-प्रतिष्ठापितश्रीशारदापीठाधिपश्रीमत्परमहंसपरिव्राजकाचार्येत्यादिविरुदांकितवैदिकमतधर्मपरिपालकपरमाचार्यमहामहिमशालिश्रीमज्जगद्गुरुसच्चिदानन्दशिवाभिनवनृसिंहभारतीस्वामिदिव्यसन्निधानाय सादरं सविनयं च उपहारत्वेन साष्टांगपातपूर्वं समर्पित

एतद्ग्रन्थप्रकटयित्रा रा. हालास्यनाथशास्त्रिणा.

आपस्तम्बमहर्षिणा विरचितं धर्मं सहज्ञोज्ज्वला-
वृत्त्या श्रीहरदत्तमिश्रकृतया लुप्तप्रसृत्याधुना ।
सम्मुद्र्योज्ज्वलनागराख्यलिपिभिर्धर्मज्ञतुष्ट्यै मुदा
भक्त्या सादरमर्पितं इह जगदाचार्येन्द्रसत्सन्निधौ ॥१॥

ये श्रीशृंगगिरौ जगद्गुरुपदे राजन्ति वन्द्येऽखिले
योगीन्द्रैरपि चित्तशुद्धिमहिता श्रीमन्नृसिंहाह्वया
येषां दिक्षु यशश्छटातिविमला शिष्यौघसंलालिता
विश्रान्तिं लभते यदीयकरुणा शिष्यान् प्रशास्त्यन्वहम् ॥२॥

ये श्रीशंकरसन्मतस्थपरमाकूतोपदेशादिभि-
र्नित्यं शिष्यगणानवन्ति निखिलान् द्विग्जैर्धात्रीतले ।
तेऽमी वैदिकधर्मपालनकलाधुर्यान्तरंगा मुदा
स्वीकृत्यैनमनुग्रहं वितनुयुर्दीने किशोरे मयि ॥३॥

ईशः सद्गुरुरूप इत्युपदिशन्व्यासोक्तिशोऽकृत्रिमा
तस्मात्कर्मसमर्पणं समुचितं श्रीमद्गुरोस्सन्निधौ ।
इत्यालोक्य विधाय यत्नमनिशं दिष्ट्यार्ह संसाधितं
कर्मैतद्धि निवेदय शंकरगुरुप्राप्त्यादयं प्रार्थनाम् ॥४॥

श्रीमच्छंकरभगवत्स्थापितपीठाधिपत्यधृतशोभाः ।
सर्वाभीप्सितसिद्धिं कुर्युर्नरसिंहभारतीयतयः ॥५॥

इत्थम्. एतद्ग्रन्थप्रकटयिता
श्रीमच्छंकरभगवत्पादचरणाम्बुजसेवा-
परमानन्दनिर्भरस्वान्तः
रा. हालास्यनाथशास्त्री.

तमप्रगतमेतत्सर्वमत्रप्रबन्धरत्नम् । एतौ: प्रतिकृती सम्यक्परिशील्य परिशोध्य च महता प्रयासेन समग्रोज्ज्वलावृत्तिसंवलितममुमा पुस्तकमत्र प्रबन्धं पारायणोपयोगिना स्थूलाक्षरमुद्रितेन केवलमूलपाठेनापि संयोज्य समग्रं मुद्रणपरिष्कारम् । अत्र च सूत्रविभागः प्राय: उज्ज्वलवृत्त्यानुगुण्येन विहितोऽपि क्वचित् क्वचित् बम्बानगरीमुद्रितसूत्रपाठेन विप्रतिपद्येत । यद्यप्ययं प्रबन्धः मुद्रणकाले असकृत्परिशोधित एव । अज्ञानसिद्धतया वा अबोधविभ्रमयोः पुरुषचित्तस्य कार्यान्तरवैयग्र्यजनितेन मच्चितानवधान दोषेण वा क्वचित् क्वचिदक्षरच्युतिप्रभृतयो दोषा समजनिषतेत्यतो ज्ञानात् पुनः परिशोध्य काञ्चन शुद्धाशुद्धपत्रिकामपि सम्योजयम् ।

यदीतोऽन्येऽपि दोषा दृश्येरन्नसंशोधिता: तान् मर्षयन्तु नः सुहृद इति साञ्जलिबन्धमभ्यर्थये । अत्र विषये पुस्तकान्तरप्रदानेन कृतोपकारिणां पूर्वोद्दिष्टनामधेयानां वैद्यनाथशास्त्रिप्रभृतीनामेतच्छोधनविषये असकृद्विरचितोपदेशानामव्याजकरुणार्णवानां मतिमन्दरपरिलोडितपाणिनितन्त्र पारावारसमुद्धृततत्त्वार्थपीयूषसमनुगृहीतविद्यामृताभ्यर्थिमुमुक्षुनिकराणाम् अभिज्ञशिखामणीनामस्मदाचार्यचरणानां श्रीमच्छठकोपाचार्यमहीनाञ्च प्रत्युपकाराक्षमतयोपहारयामि बहून् प्रणामान् । धनिकजनैकसाध्ये महति मुद्रणव्यवसाये प्रवृत्तस्य मम द्रव्यसहाय्यादिना महान्तमुपकारमातन्वतां तञ्जासंस्थानमध्यप्रवहत्कवेरकन्यकादक्षिणतटमण्डनायित (तिरुवावडुतुरै) नामक श्रीमद्ब्रह्ममुक्तिक्षेत्रविराजमानश्रीकैलासपरम्परागतनन्दिकेशाधिष्ठितश्रीशैवमठाधिपानामविरतमाम्नायमानब्रह्मरसायसाह्यानां धार्मिकशिखामणीनां श्रीमदम्बलवाणदेशिकाभिधपण्डारचूडामणीनां महत्साहाय्यमेव, एतादृशव्यवसायजीवातुभूतमिति सञ्जातकातिशयः तेषामविरतमुपचीयमानं धर्मसंपत्तिशिष्यसपत्न्यादिकमभ्युदयजालमुत्तरोत्तरमभिवृद्धं भूयादिति समभ्यर्थये भगवन्तं भवानीपरिवृढम् ॥

एतत्परिशोधने अकारादिक्रमेण सूत्रानुक्रमणिकादिलेखने च विहितसाहाय्याय शिष्यसम्मिताय सुन्दरशास्त्रिणे महान्तं प्रत्युपकारं धारयामि । इत्यल्पमतिपल्लवितेन ॥ इत्थं

ग. हालास्यनाथशास्त्री ।

केतः । शर्म सुखं तदस्य नास्तीत्यशर्मा । कञ्चिदपि शरणं न प्रतिपन्नः न वा कस्यचिच्छरणभूत इत्यशरणः । स्वाध्यायः प्रणवादिपवित्राणां जपः । तत्र बोधायनः—'वृक्षमूलिको वेद सन्न्यासी वेदो वृक्षस्तस्य मूलं प्रणवः प्रणवात्मको वेदः प्रणवो ब्रह्मभूयाय कल्पत इति होवाच प्रजापति'रिति । तत्रैव वाचं विसृजेत् । अन्यत्र मौनव्रतः स्यात् । यावता प्राणाः ध्रियन्ते सा प्राणवृत्तिः । तावतीं भिक्षां ग्रामे प्रतिलभ्य । एतावानस्य ग्रामे प्रवेशः अन्यदा बहिर्वासः । इहार्थाः कृष्यादयः परलोकार्थाश्च जपहोमादयो यस्य न सन्ति सोऽनिहोऽनमुत्र इत्युक्तः । एवंभूतश्चरेत् । नैकस्मिन् ग्रामे द्व्यहमपि वसेत् । अत्र गौतमः— 'न द्वितीयामपर्तुरात्रिं ग्रामे वसे'दिति 'वर्षासु ध्रुवशील' इति, च ॥१०॥ *तस्य मुक्तमाच्छादनं विहितम् ॥ ११॥ यत् परैर्मुक्तं परित्यक्तमयोग्यतया, तत् तस्य विहितमाच्छादनं, तद्वास आच्छादयेत् । निर्णिज्येति गौतमः ॥ ११॥ * सर्वतः परिमोक्षमेके ॥ १२॥ सर्वैरेव वासोभिः परिमोक्षमेके उपदिशन्ति । न किञ्चिदपि वासो बिभृयात् । अनग्न एव चरेदिति । अपर आह—सर्वतो विधितो निषेधतश्चास्य परिमोक्षमेके ब्रुवते । न किञ्चिदस्य कृत्यं न किञ्चिदस्य वर्ज्यमिति ॥ १२॥ एतदेवोदाहरणैः प्रपञ्चयति—* सत्यानृते सुखदुःखे वेदानिमं लोकममुं च परित्यज्यात्मानमन्विच्छेत् ॥ १३॥ सत्यं वक्तव्यमिति योऽयं नियमस्तं परित्यज्य तथा तत्र वक्तव्यमनृतं तद्धि सत्याद्विशिष्यत इत्यादिके विषये अनृतं वक्तव्यमिति योऽयं नियमस्तं च परित्यज्य । सुखं मृष्टभोजनादिजन्यम् । दुःखं शीतवातादिजन्यम् । वेदान् स्वाध्यायाध्ययनम् । इमं लोकम् ऐहलौकिकं काम्यं कर्म । अमुं च लोकं पारलौकिकं काम्यं कर्म । सर्वमेतत् परित्यज्य आत्मानमध्यात्मपटलोक्तमन्विच्छेत् उपासीतेति । तदेव ज्ञानबलावलम्बनेन, सत्यानृतादिविधिनिषेधा ये स्वैरं प्रवर्तन्ते सिद्धाः तेषां मतमुपन्यस्तम् ॥ १३॥ अथैतेषामेवं स्वैरचारिणां किं तदत्र प्रमाणं तत्राह— * बुद्धे क्षेमप्रापणम् ॥ १४॥ आत्मनि बुद्धेऽवगते सति तदेव ज्ञानं सर्वमशुभं प्रक्षाल्य क्षेमं प्रापयति । श्रूयते हि— 'न कर्मणा वर्धते नो कनीयान् । त

स्यैवात्मा महिमानं विदित्वा । न कर्मणा लिप्यते पापकेने'ति 'तद्यथेषी कातूलमग्नौ प्रोतं प्रदूयते एवं हास्य सर्वे पाप्मानः क्षीयन्ते' इति च ॥ स्मर्यते च— 'यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन । ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥' इति ॥ १४॥ तदिदं निराकरोति - * तच्छास्त्रैर्विप्रतिषिद्धम् ॥ १५॥ यानि यतेरेव कर्तव्यप्रतिपादनपराणि शास्त्राणि, तैरेव तद्विप्रतिषिद्धम् । तत्र मनु — 'क्रुध्यन्तं न प्रतिक्रुध्येदाक्रुष्टः कुशलं वदेत् । सप्तद्वारावकीर्णां च न वाचमनृतां वदेत् । न चोत्पातनिमित्ताभ्यां न नक्षत्राङ्गविद्यया । नानुशासनवादाभ्यां भिक्षां लिप्सेत कर्हिचित् ॥' अतो यतिमेव प्रकृत्य यानि विहितानि कर्माणि तानि कर्तव्यानि । यानि च निषिद्धानि तानि च वर्जनीयानि ॥ १५ ॥ बुद्धे क्षेमप्रापणमित्येतत् प्रत्यक्षविरुद्धमित्याह— * बुद्धे चेत्क्षेमप्रापणमिहैव न दुःखमुपलभेत ॥ १६ ॥ आत्मबोधमात्रेण चेत् क्षेमं प्राप्यते, तदा इहैव 'शरीरे दुःखं नोपलभेत ज्ञानी । न चैवमस्ति । न हि ज्ञानिनां मूर्धाभिषिक्तमन्योऽपि क्षुधादुःखमेव तावत् क्षणमात्रमपि संसोढुं प्रभवति ॥ १६ ॥ * एतेन परं व्याख्यातम् ॥ १७॥ परलोके भवपुषि दुःखमेतेन व्याख्यातं न स्वैरचारिणां निवर्तत इति । तस्मात् कर्मभिः परिपक्वकषाय एव श्रवणमनननिदिध्यासनैः साक्षात्कृतात्मस्वरूपः प्रतिषिद्धेषु कटाक्षमप्यनिक्षिपन्नष्टाङ्गयोगनियतो मुच्यत इति ॥ अत्रोदाहृतं 'ज्ञानेन सर्वं दहत' इति तत्र, ज्ञानदशायाः प्रागार्जितानि कर्माणि प्रायश्चित्तेन ज्ञानेन वा दह्यन्त इत्युच्यते, न पुनर्ज्ञानदशायां स्वैरचारोऽनुज्ञायते । तस्य हि स्वशरीरेऽपि बीभत्सा' स कथं पुष्पादिभिरविशेषितमिमं जङ्गमादौ प्रवर्तेत इति । अत्र बोधायनः— 'एकदण्डी त्रिदण्डी वे'ति । गौतमः— 'मुण्डशिखण्डी वे'ति ॥ १७ ॥ * अथ वानप्रस्थः ॥ १८ ॥ अनन्तरं वानप्रस्थाश्रम उच्यते ॥ १८ ॥ * अत एव ब्रह्मचर्यवान् प्रव्रजति ॥ १९॥ प्रव्रजति प्रकर्षेण व्रजति अपुनःप्रवेशाय वनं प्रतिष्ठित इति । तथा च गौतमः— 'ग्रामं च न प्रविशेदि'ति । गतमन्यत्

उत्तरं च ॥१९॥ ***तस्योपदिशन्त्येकमग्निमनिकेतस्स्यादशर्माशरणो मुनिःस्वाध्याय एवोत्सृजमानो वाचम्** ॥२०॥ किं पुनरेकोऽग्निः । न तावदौपासनः । ब्रह्मचारित्वात् तस्माल्लौकिकेऽग्नौ यथापूर्वं सायंप्रातस्स-मिधं आदध्यादित्यर्थो विवक्षितः । अपर आह— 'श्रामणकेनाग्निमा-धाये'ति गौतमः । अस्यार्थः— श्रामणकं नाम वैखानससूत्रम्; तदुक्तेन प्रकारेण एकोऽग्निराधेयः । तस्मिन् सायंप्रातरग्निकार्यमिति । तथाच बौ-धायनः—'वानप्रस्थो वैखानसशास्त्रसमुदाचारेण वैखानसो वने मूलफला-शी तपश्शीलस्सवनेषूदकमुपस्पृशन् 'श्रामणकेनाग्निमुपसमाधाये'त्यादि अन्यद्व्रतम् ॥२०॥

**इत्येकविंशतितमी खण्डिका ॥ प्र०२ प०८ ख०२१ ॥**

---

***तस्यारण्यमाच्छादनं विहितम्** ॥१॥ अरण्ये भवमारण्यम्, अ-जिनं वल्कलादि ॥१॥ ***ततो मूलैः फलैः पर्णैस्तृणैरिति वर्तयंश्चरेत्** ॥ २॥ ततो मूलादिभिर्वर्तयन् वृत्तिः प्राणयात्रा तां कुर्वंश्चरेच्चरणशीलः स्यात् ॥२॥ ***अन्ततः प्रवृत्तानि** ॥३॥ मूलादिभिः स्वयंगृहीतैः कञ्चि-त्कालं वर्तयित्वा अन्ततः अन्ते प्रवृत्तानि स्वयमेव पतितानि अभिनिश्रये-दिति वक्ष्यमाणेन सम्बन्धः । तान्यभिनिश्रित्य तैर्वर्तयेदिति ॥३॥ ***ततोऽपो वायुमाकाशमित्यभिनिश्रयेत्** ॥४॥ ततः कियन्तञ्चित्कालमब्भक्ष-णः ततो वायुभक्षः ततः आकाशमभिनिश्रयेत् न किञ्चित् भक्षयेदिति । अभिनिश्रयणं सेवनम् ॥ ४ ॥ ***तेषामुत्तर उत्तरस्संयोगः फलतो वि-शिष्टः** ॥५॥ संयुज्यते संश्रयत इति संयोगः । तेषां मूलादीनां मध्ये उत्तरोत्तरसमाश्रयणं फलतो विशिष्टमिति द्रष्टव्यम् ॥५॥ ***अथ वान-प्रस्थस्यैवानुपूर्व्यमेक उपदिशन्ति** ॥६॥ अथेति पक्षान्तरोपन्यासे । पूर्वं ब्रह्मचर्यादेव वनप्रवेश उक्तः । एके त्वाचार्यास्तस्यैव वानप्रस्थस्यानु-पूर्व्यं कर्मोपदिशन्ति ॥ ६ ॥ कथं—***विद्यां समाप्य दारं कृत्वाग्नीना-धाय कर्माण्यारभते सोमावराध्यानि यानि श्रूयन्ते** ॥७॥ ब्रह्मचर्ये स्थितो विद्यां समाप्य गृहस्थश्च भूत्वाग्नीनाधाय कर्माणि कुर्यात् । कानि सो-

मावराध्यानि• अवरार्धे पश्चाद्भवं तन्न भवोऽवरार्ध्यः. सोमः अवरार्ध्यो येषां तानि सोमावराध्यानि. सोमान्तानि हविर्यज्ञाख्यानि चातुर्मास्यादीनि हविर्यज्ञान् सोमं चेत्यर्थः । यानि श्रूयन्ते तानि श्रुतौ विहितानि ॥७॥ *गृहान् कृत्वा सदारस्सप्रजस्सहाग्निभिर्बहिर्ग्रामाद्वसेत् ॥८॥ अथ ग्रामाद्बहिररण्ये गृहान् कृत्वा सकुटुम्बस्सहैव चाग्निभिर्ग्रामाद्बहिर्वसेत् । अस्मिन्पक्षे प्रागुक्तमेकाग्निर्नास्त्येतन्नास्ति ॥८॥ *एको वा ॥९॥ अथवा पुत्रेषु भार्यां निक्षिप्य स्वयमेक एव वसेत् । अस्मिन् पक्षे प्राजापत्यान्निरुप्येष्टिमिति परिव्राजकोक्तेन न्यायेन श्रौतानग्नीनात्मनि समारोप्य श्रामणकेनाग्निमाधाय एकाग्निर्भवेत् ॥९॥ *सिलोञ्छेन वर्तयेत् ॥१०॥ व्यु.ह्याख्या.सिलोञ्छ । तेन. वर्तयेत् प्राणयात्रां कुर्यात् । इदं सकुटुम्बस्य एकाकिनश्च साधारणम् . एकाकिन एवेत्यन्ये ॥१०॥ *न चात ऊर्ध्वं प्रतिगृह्णीयात् ॥११॥ यदा सिलोञ्छेन वृत्तिरारब्धा अत ऊर्ध्वं न कुतश्चिदपि प्रतिगृह्णीयात् ॥११॥ * अभिषिक्तश्च जुहुयात् ॥१२॥ यदा जुहुयात्तदा अभिषिक्तः स्नातः । अनुवादोऽयं स्नाने विशेष विधातुम् ॥१२॥ *शनैरपोऽभ्युपेयादभिघ्नन्नभिमुख आदित्यमुदकमुपस्पृशेत् ॥१३॥ शनैरवेगेन जलाशये प्रविशेत् । प्रविश्य चाभिघ्नन् हस्तेनोदकं ताडयन् उदकमुपस्पृशेत् स्नायात् आदित्याभिमुखः ॥१३॥ *इति सर्वत्रोदकोपस्पर्शनविधिः ॥१४॥ सर्ववर्णाश्रमसाधारणमेतत् । तथा चोत्तरत्र तस्य ग्रहणम् ॥१४॥ *तस्य द्वन्द्वं द्रव्याणामेक उपदिशन्ति पाकार्थभोजनार्थवासिपरशुदात्रकाजानाम् ॥१५॥ यानि पाकार्थानि तानि मृद्भाण्डादीनि । यानि च भोजनार्थानि कांस्यादीनि । वासिर्दर्व्यादि । तेषां सर्वेषां वास्यादीनां चतुर्णामेकैकस्य द्वे द्वे द्रव्ये उत्पाद्ये इत्येक उपदिशन्ति । काजमपि वास्यादिवदुपकरणविशेषो दारुमयः ॥ १५ ॥ * द्वन्द्वानामेकैकमादायेतराणि दत्त्वारण्यमवतिष्ठेत ॥१६॥ तेषां पाकादिसाधनानां द्रव्याणामेकैकं द्रव्यं स्वयमादायेतराणि भार्यायै दत्त्वा अरण्यमवतिष्ठेत उपतिष्ठेत आश्रयेदिति ॥ १६ ॥ तस्यारण्येनैवात ऊर्ध्वं होमो वृत्तिः

प्रतीक्षाऽऽच्छादनं च ॥ १७ ॥ तस्य वानप्रस्थस्यारण्यप्रवेशादूर्ध्वं आरण्येनैव नीवारादिना होमः वृत्तिः प्राणयात्रा प्रतीक्षा अतिथिपूजा च आच्छादनं वल्कलादिना ॥ १७ ॥ *येषु कर्मसु पुरोडाशाश्चरवस्ते कार्याः ॥ १८ ॥ येषु दर्शपूर्णमासादिषु पुरोडाशा विहिताः गृहस्थस्य, तेऽत्रस्य तत्स्थाने चरवः कार्याः ॥ १८ ॥ *सर्वं चोपांशु सह स्वाध्यायेन ॥ १९ ॥ सर्वं च कर्मकाण्डं साङ्गं प्रधानमुपांशु भवति । पारायणब्रह्मयज्ञाध्ययनेन सह तदप्युपांशु कर्तव्यमिति ॥ १९ ॥ *नारण्यमभ्याश्रावयेत् ॥ २० ॥ उपांशुवचनादेव सिद्धे वचनमाभिमुख्यप्रतिषेधार्थम् । तेनारण्यस्था यथा नाभिमुख्येन शृणुयुः तावदुपांश्विति ॥ २० ॥ *अग्न्यर्थं शरणम् ॥ २१ ॥ शरणं गृहं तदग्न्यर्थमेव ॥ २१ ॥ *आकाशे स्वयम् ॥ २२ ॥ स्वयं चाकाश एव वसेत् ॥ २२ ॥ *अनुपस्तीर्णे शय्यासने ॥ २३ ॥ शयनं चासनं चानुपस्तीर्णे देशे कुर्यात् न तु किञ्चित् उपस्तीर्य ॥ २३ ॥ *नवे सस्ये प्राप्ते पुराणमनुजानीयात् ॥ २४ ॥ नवे धान्ये श्यामाकनीवारादौ प्राप्ते जाते पुराणं पूर्वसञ्चितं सस्यमनुजानीयात् परित्यजेत् । तत्र मनुः—'त्यजेदाश्वयुजे मासि मुन्यन्नं पूर्वसञ्चितम् । जीर्णानि चैव वासांसि पुष्पमूलफलानि च ॥' इति ॥ २४ ॥

इति द्वाविंशतितमी खण्डिका ॥ प्र०२.प०९ ख०२२ ॥

---

*भूयांसं वा नियममिच्छन्नन्वहमेव पात्रेण सायंप्रातरर्थमाहरेत् ॥ १ ॥ इदमेकाकिनो वानप्रस्थस्य भूयासं नियममिच्छन्न सञ्चयं सञ्चिनुयात् । किं तर्हि अन्वहमेव पात्रेण येनकेनचित् सायंप्रातश्चार्थमशनीयं आत्रमीहरेत् वानप्रस्थेभ्य एव । एवं कियन्तंचित्कालं वर्तयित्वा ॥ १ ॥ *ततो मूलैः फलैः पर्णैस्तृणैरिति वर्तयंश्चरेदन्ततः प्रवृत्तानि ततोऽपो वायुमाकाशमित्यभिनिश्रयेत् तेषामुत्तर उत्तरस्संयोगः फलतो विशिष्टः ॥ २ ॥ स्पष्टं गतम् ॥ निरूपिता आश्रमाः ॥ २ ॥ *अथ पुराणे श्लोकावुदाहरन्ति—अष्टाशीतिसहस्राणि ये प्रजामीषिर ऋषयः । दक्षिणेनार्यम्णः पन्थानं ते श्मशानानि भेजिरे ॥ ३ ॥ अथेदानीं पक्षप्रतिपक्षरूपेण तेषा

मेव प्राधान्यमप्राधान्यं च विरुध्यते । अष्टाशीतिसहस्राणि ये गृहस्था ऋषयः प्रजामीषिरे प्रजापतिमभ्यनन्दन् ते अर्यम्णो यो दक्षिणेन पन्थाः दक्षिणायनमार्गः तं प्राप्य छान्दोग्योक्तेन धूमादिमार्गेण गत्वा पुनरपि रमशानानि भेजिरे मरणं प्रतिपेदिरे । जायस्व म्रियस्वेत्याजीवं जीविभावमापेदिर इति गृहस्थानां निन्दा ॥ ३ ॥ *अष्टाशीतिसहस्राणि ये प्रजां नैषिर ऋषयः । उत्तरेणार्यम्णः पन्थानं तेऽमृतत्वं हि कल्पते ॥ ४ ॥ ये तु प्रजाति नाभ्यनन्दन् ते उत्तरायणमार्गेण प्राप्य अर्चिरादिमार्गेण गत्वा अमृतत्वं विभक्तिव्यत्ययः अमृतत्वाय कल्पते वचनव्यत्ययः कल्पन्ते समर्थाः सम्पद्यन्ते ॥ ४ ॥ *इत्यूर्ध्वरेतसां प्रशंसा ॥ ५ ॥ गृहस्थादन्ये त्रयोऽपि ऊर्ध्वरेतसः । तेषामेषा प्रशंसेति पुनरपि तेषामेव प्रकारान्तरेण प्रशंसा ॥ ५ ॥ * अथापि सङ्कल्पासिद्धयो भवन्ति ॥ ६ ॥ अथापि अपि सङ्कल्पादेव सिद्धयो भवन्ति तेषामूर्ध्वरेतसाम् ॥ ६ ॥ तत्रोदाहरणम्—*यथा वर्षं प्रजा दानं दूरेदर्शनं मनोजवता यच्चान्यदेवं युक्तम् ॥ ७ ॥ यदि महत्यामनावृष्टौ सत्यां वर्षतु देव इति ते कामयेरन् तदा कामवर्षं पर्जन्यो भवति । यदि वा कश्चिदपुत्रमनुगृह्णीयुः पुत्रोऽस्य जायतामिति स पुत्रवाननेन भवति । यदि चोलेष्ववस्थितास्तत्रैव हिमवन्तं दिदृक्षेरन् तथैव तद्भवति । मनस इव जवो येषां ते मनोजवाः तेषां भावो मनोजवता । यदि कामयेरन् अमुं देशमियत्येव कालकाष्ठायां प्राप्नुयामिति ततो यावता कालेन मनस्तं देशं प्राप्नोति तावता तं देशं प्राप्नुयुरिति । यच्चान्यदेवं युक्तम् ॥ ७ ॥ *तस्माच्छ्रुतितः प्रत्यक्षफलत्वाच्च विशिष्टानाश्रमानेतानेके ब्रुवते ॥ ८ ॥ रोगिणामारोग्यादि तदपि सङ्कल्पादेव तथा भवति । यस्मादेवं तस्माच्छ्रुतितः श्रूयते श्रुतेः 'यदहरेव विरजेत्तदहरेव प्रव्रजेदि'त्यादिश्रुत्यनुगतत्वादुक्तेन प्रकारेण प्रत्यक्षफलत्वाच्च एतानूर्ध्वरेतसामाश्रमान् विशिष्टान् गार्हस्थ्यादुत्कृष्टानेके ब्रुवत इति ॥ ८ ॥ तदिदं गार्हस्थ्योत्कर्षप्रतिपादनेन निराकरोति —*त्रैविद्यवृद्धानां तु वेदाः प्रमाणमिति निष्ठा तत्र यानि श्रूयन्ते ॥ ९ ॥ त्रयवयवा विद्या त्रिविद्या त्रयो वेदाः । तां ये पाठतश्चार्थतश्च विन्दन्ति ते

त्रैविद्याः । तेषु पक्वज्ञानास्त्रैविद्यवृद्धाः । तेषां वेदाः प्रमाणं तेषां वेदशास्त्रविदां वेदा एव प्रमाणम् अतीन्द्रियेऽर्थे इति । निष्ठा निर्णयः । यथाह भगवान् जैमिनिः—'चोदनालक्षणोऽर्थो धर्मः प्रत्यक्षमनिमित्तमि'ति च । ततश्च तत्र वेदे यानि कर्माणि श्रूयन्ते किंलक्षणानि ॥९॥ ***व्रीहियवपश्वाज्यपयःकपालपत्नीसम्बन्धान्युच्चैर्नीचैः कार्यमिति तद्विरुद्ध आचारोऽप्रमाणमिति मन्यन्ते** ॥१०॥ किंलक्षणाणि व्रीहियवादिभिस्सम्बन्धान्युच्चैः क्रियन्ते नीचा क्रियते उपांशु यजुषेत्येवंप्रकाराणि तद्विरुद्ध आचारः प्रमाणं न भवतीति मन्यन्ते । एतदुक्तं भवति । सर्वेषु वेदेषु सर्वासु च शाखासु अग्निहोत्रादीनि विश्वसृजामयनपर्यन्तानि कर्माण्येव तात्पर्यतो विधीयन्ते । अतो गार्हस्थ्यमेव श्रेष्ठम् । ऊर्ध्वरेतसां त्वाश्रमास्तद्विरुद्धा नैवाश्रयणीयाः । यदि वेदाः प्रमाणमिति । तथा च गौतमः—'ऐकाश्रम्यं त्वाचार्याः प्रत्यक्षविधानात् गार्हस्थ्यस्ये'ति । एवं गार्हस्थ्यं प्रशस्यते ॥१०॥ श्मशानानि भेजिर इति निन्दां परिहरति—***यत्तु श्मशानमुच्यते नानाकर्मणामेषोऽन्ते पुरुषसंस्कारो विधीयते** ॥ ११ ॥ यत्तु गृहस्थानां श्मशानं श्रूयते स एष नानाकर्मणामग्निहोत्रादीनामन्ते पितृमेधाख्यः पुरुषसंस्कारो विधीयते । न तु पिशाचा भूत्वा श्मशानमेव सेवन्त इति ॥११॥ कुत इत्याह—***ततःपरमनन्त्यं फलं स्वर्ग्यशब्दं श्रूयते** ॥ १२ ॥ ततः परं श्मशानकर्मणोऽनन्तरम् । अनन्त्यमपरिमितं स्वर्गशब्दवाच्यं फलं श्रूयते । 'स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकमेती'ति । स्वर्ग्यमिति यकारश्छान्दसः । उपजनः अपपाठो वा ॥ १२ ॥

॥ इति त्रयोविंशतितमी खण्डिका ॥ प्र०२ प०९ख०२३ ॥

---

पुनरपि गार्हस्थ्यमेव प्रकारान्तरेण स्तौति—***अथाप्यस्य प्रजातिममृतमाम्नाय आह प्रजामनु प्रजायसे तदु ते मर्त्यामृतमिति** ॥ १ ॥ अथापि अपि च । अस्य गृहस्थस्य । प्रजातिं प्रजासन्तानम् । अमृतम् अमरणम् । आम्नायो वेद आह । हे मर्त्य मरणधर्मिन् । प्रजा जायमानामनु त्वं प्रजायसे त्वमेव प्रजारूपेण जायसे । तदेव ते मरणधर्मिणः अमृ-

तममरणमिति न त्वं म्रियसे, यतस्त्वं प्रजारूपेण तिष्ठसीति ॥१॥ उपपन्न चेत्याह— * अथापि स एवायं विरूढः पृथक्प्रत्यक्षेणोपलभ्यते दृश्यते चापि सारूप्यं देहत्वमेवान्यत् ॥ २ ॥ अपि च स एवायं पृथग्विरूढः प्रत्यक्षेणोपलभ्यते । स एव द्विधाभूत इव लक्ष्यते । दृश्यते हि सारूप्यं द्वयोः । देहमात्रं तु भिन्नम् । देहत्वमिति स्वार्थिकस्त्वः ॥२॥ यदि पुत्ररूपेणावस्थानं, किमेतावतेत्याह— * ते शिष्टेषु कर्मसु वर्तमानाः पूर्वेषां साम्परायेण कीर्तिं स्वर्गं च वर्धयन्ति ॥३॥ ते पुत्राः शिष्टेषु चोदितेषु कर्मसु वर्तमाना अवस्थिताः पूर्वेषां पितृपितामहादीनां साम्परायेण परलोकेन सम्बद्धानां कीर्तिं स्वर्गं च वर्धयन्ति । अस्यायं पुत्र एव कर्मा अस्यायं पौत्र इति स्वर्गं च वर्धयन्ति । कीर्तिमत्ता हि स्वर्गवासश्रूयते ॥ ३ ॥ *एवमवरोऽवरः परेषाम् ॥४॥ एवमनेन प्रकारेण अवरोऽवरः परेषां कीर्तिं स्वर्गं च वर्धयन्ति ॥४॥ *आभूतसम्प्लवात्ते स्वर्गजितः ॥५॥ भूतसम्प्लवो महाप्रलयः । आ तस्मात्ते पुत्रिणः स्वर्गजितो भवन्ति ते च ॥५॥ *पुनस्सर्गे बीजार्था भवन्तीति भविष्यत्पुराणे ॥६॥ प्रलयानन्तरं सर्गः, तत्र संसारस्य बीजार्थाः प्रजार्थाः प्रजापतयो भवन्तीति भविष्यत्पुराणे श्रूयते ॥ ६ ॥ *अथापि प्रजापतेर्वचनम् ॥७॥ अपि च प्रजापतेरपि वाक्यमस्मिन्नर्थे भवति । गार्हस्थ्यमेव वरिष्ठमिति ॥७॥ * त्रयीं विद्यां ब्रह्मचर्यं प्रजातिं श्रद्धां तपो यज्ञमनुप्रदानम् । य एतानि कुर्वते तैरित्सह स्मो रजो भूत्वा ध्वंसतेऽन्यत्प्रशंसन्निति ॥८॥ त्रयीं विद्यां त्रयाणां वेदानामध्ययनम् । ब्रह्मचर्यमष्टाचत्वारिंशदादिकम् । प्रजातिः प्रजोत्पादनम् । श्रद्धा आस्तिक्यम् । तप उपवासादि । यज्ञमग्निहोत्रादिकं सोमयागान्तम् । अनुप्रदानम् अन्तर्वेदि बहिर्वेदि च दानम् । य एतानि कर्माणि कुर्वते, तैरित् तैरेव सह वयं स्मः त एवास्माकं सहायाः । अन्यत्तु ऊर्ध्वरेतसामाश्रमादिकं प्रशंसन् पुरुषो रजः पांसुर्भूत्वा ध्वंसते नश्यति । इतिशब्दो वचनसमाप्त्यर्थः । यथैव तर्हि शिष्टेषु वर्तमानाः पुत्राः पूर्वेषां कीर्तिं स्वर्गं च वर्धयन्ति, तथा प्रतिषिद्धेषु वर्तमाना अकीर्तिं नरकं च वर्धयेयुः ॥८॥ तत्राह— * तत्र ये पापकृतस्त एव ध्वंसन्ति यथा पर्ण

वनस्पतेर्न परान् हिंसन्ति ॥९॥ तेन प्रजाननकाले ये धर्मस्य कर्तारः, त एव ध्वंसन्ते न परान् पित्रादीन् हिंसन्ति । यथा यदेव पर्णं वनस्पतेः कीटादिभिर्दूषितं तदेव पतति न वनस्पतिं शाखान्तरं वा पातयति ॥९॥ तदेव दृष्टान्तेनोपपादयति—*नास्यास्मिँल्लोके कर्मभिस्सम्बन्धो विद्यते तथा परस्मिन् कर्मफलैः ॥१०॥ अस्येति सामान्यापेक्षमेकवचनम् । अस्य पित्रादेः पूर्वपुरुषस्य अस्मिन् लोके पुत्रकृतैः कर्मभिः सम्बन्धो न विद्यते । दृष्टान्तोऽयं यथा पुत्रकृतेषु कर्मसु पित्रादेः कर्तृत्वं नास्ति, तथा परस्मिन्नपि लोके कर्मफलैरपि सम्बन्धो नास्तीत्यर्थः ॥१०॥ *तदेतेन वेदितव्यम् ॥११॥ यदुक्तं ये पापकृतस्त एव ध्वंसन्ति न परान् हिंसन्तीति तदर्थरूपमेतेन वक्ष्यमाणेन हेतुना वेदितव्यम् ॥११॥ *प्रजापतेर्ऋषीणामिति सर्गोऽयम् ॥१२॥ प्रजापतेर्हिरण्यगर्भस्य ऋषीणां च मरीच्यादीनामयं सर्गो देवादिस्तिर्यगन्तः । ते चाध्वंस्ता एव स्वे स्वे पदे वर्तन्ते । यदि च पुत्राः पापकृतः स्वयं ध्वंसमानाः परानपि ध्वंसयेयुः तदेतन्नोपपद्यते पुण्यकृतः सुखेनाद्यापि वर्तन्त इति ॥१२॥ अत्रोदाहरणमाह—*तत्र ये पुण्यकृतस्तेषां प्रकृतयः परा ज्वलत्य उपलभ्यन्ते ॥१३॥ तत्र स्वर्गे ये पुण्यकृतो वसिष्ठादयस्तेषां प्रकृतयश्शरीराणि परा उत्कृष्टाः ज्वलत्यो दीप्यमाना उपलभ्यन्ते । दिवि यथा सप्तर्षिमण्डलम् । श्रूयते च 'सुकृतां वा एतानि ज्योतींषि यन्नक्षत्राणी'ति । इदमपि प्रमाणं न पुत्राणां स्वैः पूर्वेषां प्रध्वंस इति ॥१३॥ *स्यात्तु कर्मावयवेन तपसा वा कश्चित्सशरीरोऽन्तवन्तं लोकं जयति सङ्कल्पसिद्धिश्च स्यान्न तु तज्ज्यैष्ठ्यमाश्रमाणाम् ॥१४॥ कर्मावयवेन पूर्वार्जितानां कर्मणामेकदेशेन भुक्तशेषेण तपसा वा तीव्रेण कश्चिदूर्ध्वरेतास्सहैव शरीरेणान्तवन्तं लोकं जयतीति यत्तत् स्यात् । सम्भवेऽपि यच्च सङ्कल्पादेव सिद्धिस्स्यादिति, तदपि स्यात् । न तु तदाश्रमाणां ज्यैष्ठ्यकारणमिति । तदेव 'मैकाश्रम्यं त्वाचार्या' इत्ययमेव पक्षः स्थापितः । अन्ये मन्यन्ते—सर्वे आश्रमा अदूषिता भूषिताश्च । तत्र तेषु सर्वेषु यथोपदेशमव्यग्रो वर्तमानः क्षेमं गच्छतीत्येतदेव स्थितमिति ॥१४॥

इति चतुर्विंशतितमी खण्डिका ॥ प्र०२ प०९ ख०२४ ॥

इति चापस्तम्बधर्मसूत्रवृत्तौ हरदत्तमिश्रविरचितायां उज्ज्वलायां द्वितीयप्रश्ने नवमः पटलः ॥९॥

आख्याताः सर्ववर्णानां साधारणवैशेषिका धर्मा राज्ञस्तु विशेषाद्वक्ष्यामः ॥१॥ उक्तवक्ष्यमाणसङ्कीर्तनं श्रोतृबुद्धिसमाधानार्थम् । अहिंसासत्यास्तेयादयः सर्ववर्णानां साधारणधर्माः । अध्ययनादयस्त्रयाणाम् । अध्यापनादयो ब्राह्मणस्य । युद्धादयः क्षत्रियस्य । कृष्यादयो वैश्यस्य । शुश्रूषा शूद्रस्य । राजा त्वभिषिक्तो विवक्षितः । तस्यैव हि वक्ष्यमाणं धर्मजातं सम्भवति । तस्य विशेषाद्विशेषतो यदुक्तव्यं तद्वक्ष्याम इति । विशेषानिति द्वितीयान्तपाठस्तु युक्तः ॥१॥* दक्षिणाद्वारं वेश्म पुरं च मापयेत् ॥२॥ वेश्म गृहं पुरं नगरं तदुभयमपि दक्षिणाद्वारं मापयेत् कारयेत् स्थपत्यादिभिः । दक्षिणपार्श्वे द्वारं यस्य तत्तथोक्तम् ॥२॥* अन्तरस्यां पुरि वेश्म ॥३॥ सर्वेषामेव प्रकाराणां मध्ये या पुरन्तरस्यामन्तरस्यां पुरि वेश्म मापयेदात्मनः ॥३॥* तस्य पुरस्तादावसथस्तदामन्त्रणमित्याचक्षते ॥४॥ तस्य वेश्मनः पुरस्तादावसथः कारयितव्यः । एत्य वसन्त्यस्मिन्नित्यावसथः आस्थानमण्डपः । तस्यामन्त्रणमिति संज्ञा ॥४॥* दक्षिणेन पुरं सभा दक्षिणोदग्द्वारा यथोभयं सन्दृश्येत बहिरन्तरं चेति ॥५॥ दक्षिणेनेत्येनबन्तम् । पुरमिति 'एनपा द्वितीया'इति द्वितीयान्तम् । पुरस्य दक्षिणतः अदूरे सभा कारयितव्या । दक्षिणोदग्द्वारा दक्षिणस्यामुत्तरस्यां च दिशि द्वारे यस्यास्सा तथोक्ता । किमर्थमुभयत्र द्वारमिति चेत्, यद्बहिर्वृत्तं यच्चाभ्यन्तरं तदुभयमपि यथा सन्दृश्येतेत्येवमर्थमिति सैषा सभा । तस्यां द्यूतार्थिनः प्रविशन्तीति तदाख्यानं राज्ञः ॥५॥* सर्वेष्वेवाजस्रा अग्नयः स्युः ॥६॥ वेश्मन्यावसथे सभायामित्येतेषु सर्वेष्वेव स्थानेषु लौकिका अग्नयोऽजस्राः स्युः । अविच्छेदेन धार्याः ॥६॥* अग्निपूजा च नित्या यथा गृहमेधे ॥७॥ तेषु चाग्निषु नित्यमग्निपूजा कार्या । यथा गृहमेधे औपासने सायंप्रातर्होम इत्यर्थः । मन्त्रावपि तावेव द्रव्यमपि तदेव ॥७॥* आवसथे श्रोत्रियावराध्यानतिथीन् वासयेत् ।८॥ आवसथाख्ये स्थाने अतिथीन् वासयेत् । ते विशेष्यन्ते श्रोत्रियावराध्यानिति । अवरपर्यायोऽवराध्यशब्दः । यदि सर्वान्वासयितुं न शक्नोति

श्रोत्रियानपि तावद्वासयेदिति ॥ ८ ॥ *तेषां यथागुणमावसथाः शय्या न्नपानं च विदेयम् ॥ ९ ॥ तेषामतिथीनां यथागुणं विद्यावृत्ताद्युगुणमावसथादि देय, विशेषेण देयम् । आवसथा अपवरकादयः । शय्या खट्वादयः । अन्नमोदनादि । पानं तक्रादि सूपादि ॥ ९ ॥ *गुरूनमात्यांश्च नातिजीवेत् ॥ १० ॥ गुरवः पित्रादयः । अमात्या मन्त्रिणः । तान्नातिजीवेत् भक्ष्यभोज्याच्छादनादिषु तान्नातिशयीत ॥ १० ॥ *न चास्य विषये क्षुधा रोगेण हिमातपाभ्यां वा सीदेदभावाद्बुद्धिपूर्वं वा कश्चित् ॥ ११ ॥ अस्य राज्ञो विषये राष्ट्रे आहाराभावेन बुभुक्षया रोगेण व्याधिना हिमेन नीहारेण वर्षादीनामप्युपलक्षणमेतत् । आतपः आदित्यरश्मितापः । एतैः प्रकारैरभावात् बुद्धिपूर्वं वा न कश्चिद्ब्राह्मणोऽप्यवसीदेत् अवसन्नो न स्यात् । राज्ञो ह्ययमपराधो यदाहाराद्यभावेन कश्चिदवसन्नः स्यात् । बुद्धिपूर्वं वेत्यत्रोदाहरणम्—यदा कश्चित् करमृणं वा दाप्यो भवति, तदा नासौ हिमातपयोरुपनिवेशयितव्यः भोजनाद्वा निरोद्धव्यः । तथा कुर्वाणं राजा दण्डयेदिति ॥ ११ ॥ *सभाया मध्येऽधिदेवनमुद्धत्यावोक्ष्याक्षान्निवपेद्युग्मान् वैभीतकान् यथार्थान् ॥ १२ ॥ पूर्वोक्तायाः सभाया मध्ये अधिदेवनं यस्योपरि कितवा अक्षैर्दीव्यन्ति तत्स्थानमधिदेवनम् । तत् पूर्वं काष्ठादिना उद्धन्ति उद्धत्यावोक्षति । अवोक्ष्य तत्राक्षान्युग्मसङ्ख्याकान्वैभीतकान् विभीतकवृक्षस्य विकारभूतान् यथार्थान् यावद्भिर्द्यूतं निर्वर्तते, तावतो निवपति । कः ? यस्तत्र राज्ञा नियुक्तः स हि को नाम ॥ १२ ॥ *आर्याः शुचयस्सत्यशीला दीवितारस्स्युः ॥ १३ ॥ आर्या द्विजातयः । शुचयोऽर्थशुद्धाः । सत्यशीलास्सत्यवादिनः । एवंभूता एव पुरुषास्तत्र दीवितारः दीवितारः स्युः त एव तत्र दीव्येयुरित्यर्थः । ते च तत्र देवित्वा यथाभाषितं पाणिकं सभिकाय दत्वा गच्छेयुः । स च राज्ञे तमायमहरहः प्रतिमासं प्रतिसंवत्सरं दद्यात् । स एव च स्थानान्तरे दीव्यतो दण्डयेत् सभास्थाने च कलहकारान् । तत्र याज्ञवल्क्यः—'गच्छेदन्तिकवृद्धेस्तु सभिकः पञ्चकं शतम् । गृह्णीयाद्धूर्तकितवादितराद्दशकं शतम् ॥ स सम्यक्पालितो दद्याद्राज्ञे भागं यथाकृ-

तम् । जितेन्द्रियत्वेनैव ... क्षमम् ॥' इति ॥१३॥ * आयुधग्रहणं नृत्तगीतवादित्राणीति राजाधीनेभ्योऽन्यत्र न विद्येरन् ॥१४॥ आयुधग्रहणादीनि राजाधीनेभ्यो राजाश्रया ये पुरुषास्तेभ्योऽन्यत्र न विद्येरन् न भवेयुः । उत्सवादिष्वन्यत्रापि भवत्याचारः ॥ १४ ॥ *क्षेमकृद्राजा यस्य विषये ग्रामेऽरण्ये वा तस्करभयं न विद्यते ॥१५॥ राज्ञो विषये ग्रामेऽरण्ये च चोरभयं नास्ति स एव राजा क्षेमकृत् क्षेमङ्करः । न त्वन्यः शतं तुभ्यं शतं तुभ्यमिति ददानोऽपि ॥१५॥

इति पंचविंशतितमी खण्डिका ॥ प्र०२ प०१० ख०२५ ॥

---

*भृत्यानामनुपरोधेन क्षेत्रं वित्तं च ददद्ब्राह्मणेभ्यो यथार्हमनन्ताँल्लोकानभिजयति ॥१॥ भृत्यानामनुपरोधेन भृत्यवर्गस्य यथोपरोधो न भवति तथा ब्राह्मणेभ्यो यथार्हं विद्यावृत्ताद्यनुरूपं क्षेत्रं वित्तं च दद्यात् । एवं ददतनन्ताँल्लोकानभिजयति ॥ १ ॥ * ब्राह्मणस्वान्यपजिगीषमाणो राजा यो हन्यते तमाहुरात्मयूपो यज्ञोऽनन्तदक्षिण इति ॥२॥ ब्राह्मणस्वानि चोरादिभिरपहृतानि अपजिगीषमाणः ब्राह्मणेभ्यो दानाय पजित्य ग्रहीतुमिच्छन् यो राजा युद्धे चोरैर्हन्यते तमाहुरात्मयूपोऽनन्तदक्षिणो यज्ञ इत्याहुर्धर्मज्ञाः । सङ्ग्रामो यज्ञः । तस्य आत्मा यूपस्थानीय आत्मेति शरीरमाह । अन्तरात्मा तु पशुस्थानीयः । प्रत्यानीतं पुनः तु द्रव्यं दक्षिणा । सूत्रे कृतं यज्ञ इत्याहुरिति गौणो वादः ॥ २ ॥*एतेनान्ये शूराः व्याख्याताः प्रयोजने युध्यमानास्तनुत्यजः ॥ ३ ॥ प्रयोजनं चोरादिभिरपहृतानां ब्राह्मणस्वानां प्रत्यानयनादि, तदर्थं युध्यमाना ये शूरास्तनुत्यजो भवन्ति तेऽप्येतेन राज्ञा व्याख्याताः आत्मयूपा यज्ञा अनन्तदक्षिणा इति ॥ ३ ॥* ग्रामेषु नगरेषु चार्याञ्छुचीन् सत्यशीलान् प्रजागुप्तये निदध्यात् ॥ ४ ॥ आर्याञ्छुचीन् सत्यशीलानिति व्याख्यातम् । एवंभूतान् पुरुषान् ग्रामेषु नगरेषु च प्रजानां रक्षणाय निदध्यात् नियुञ्जीत ॥ ४ ॥* तेषां पुरुषास्तथागुणा एव स्युः ॥५॥ तेषां नियुक्तानां ये पुरुषा नियोज्याः तेऽपि तथागुणा आर्यादिगुणा एव

स्युः ॥ ५ ॥ * सर्वतो योजनं नगरं तस्करेभ्यो रक्ष्यम् ॥ ६ ॥ सर्वतः सर्वासु दिक्षु योजनमात्रं नगरं तस्करेभ्यो रक्षणीयम् । रक्ष्यमित्यपपाठः ॥ ६ ॥ * क्रोशो ग्रामेभ्यः ॥ ७ ॥ ग्रामेभ्यस्तु सर्वासु दिक्षु क्रोशो रक्ष्यः । ग्रामेभ्य इति 'यत्तश्चाध्वपरिमाणं तत्र पञ्चमी वक्तव्ये'ति पञ्चमी ॥ ७ ॥ * तत्र यन्मुष्यते तैस्तत्प्रतिदाप्यम् ॥ ८ ॥ तत्र योजनमात्रे क्रोशमात्रे वा यन्मुष्यते चोर्यते ते नियुक्ताः स्वामिभ्यस्तत्प्रतिदद्युः राज्ञा तैस्तत् प्रतिदाप्य राजा तैः प्रतिदापयेदिति । प्रायेण दन्त्योष्ठ्यं वकारं पठन्ति ॥ ८ ॥ * धार्म्यं शुल्कमपहारयेत् ॥ ९ ॥ तत्र गौतमः—'विंशतिभागश्शुल्कः पण्ये' इति यद्वणिग्भिर्विक्रियते हिङ्ग्वादि, तस्य विंशतितमं भागं राजा गृह्णीयात् । तस्य शुल्क इति संज्ञा । एष धर्म्यश्शुल्कः । तमधिकृतैरेव हारयेत् ग्राहयेदिति । मूलादिषु विशेषस्तेनैवोक्तः । मूलफलपुष्पौषधिमधुमांसतृणेन्धनानां षाष्ठिक्यमिति ॥ ९ ॥ * अकरः श्रोत्रियः ॥ १० ॥ श्रोत्रियः करं न दाप्यः । अन्ये दाप्याः ॥ १० ॥ * सर्ववर्णानां च स्त्रियः ॥ ११ ॥ अकराः । वर्णग्रहणात् प्रतिलोमादिस्त्रियो दाप्याः ॥ ११ ॥ * कुमाराश्च प्राक् व्यञ्जनेभ्यः ॥ १२ ॥ व्यञ्जनानि श्मश्र्वादीनि । यावत्तानि नोत्पद्यन्ते तावदकराः ॥ १२ ॥ * ये च विद्यार्था वसन्ति ॥ १३ ॥ विद्यामुद्दिश्य ये गुरुषु वसन्ति ते जातव्यञ्जना अपि असमाप्तवेदा अकराः ॥ १३ ॥ * तपस्विनश्च ये धर्मपराः ॥ १४ ॥ धर्मपरा इति किम् ? ये अभिचारकामा मन्त्रसिद्ध्यै तपस्तप्यन्ते ते दाप्या एवेति ॥ १४ ॥ * शूद्रश्च पादावनेक्ता ॥ १५ ॥ त्रैवर्णिकानां पादावनेक्ता स शूद्रोऽप्यकरः ॥ १५ ॥ * अन्धमूकबधिररोगाविष्टाश्च ॥ १६ ॥ एतेऽप्यकराः यावदान्ध्यादि ॥ १६ ॥ * ये व्यर्था द्रव्यपरिग्रहैः ॥ १७ ॥ ये च परिव्राजकादयः द्रव्यपरिग्रहैर्व्यर्था निष्प्रयोजनाः शास्त्रतो येषां द्रव्यपरिग्रहः प्रतिषिद्धः तेऽप्यकराः । तथा च वसिष्ठः—'अकरः श्रोत्रियो राजा पुमाननाथः प्रव्राजितो बालवृद्धतरुणप्रजाता' इति ॥ १७ ॥ * अबुद्धिपूर्वमलङ्कृतो युवा परदारमनुप्रविशन् कुमारीं

नीया। सा हि पूर्वं पितृगोत्रा सती भर्तृगोत्रा प्रवैरभिक्रियते । अतः भर्तृप-क्षर्याणां सगोत्रस्थानीया भवति । भर्ता तु साक्षात्सगोत्रः । तां सगोत्रस्थानी-यां न परेभ्योऽसगोत्रेभ्यस्समाचक्षीत । इयमनपत्या अस्यामपत्यमुत्पादि-तामिति सगोत्रेष्वेव तु समाचक्षीत । तत्रापि देवराय तदभावे सपि-ण्डेभ्यः ॥२॥ कः पुनस्सगोत्रस्य विशेषस्तमाह— * कुलाय हि स्त्री प्रदीयत इत्युपदिशन्ति ॥ ३ ॥ हि यस्मात् स्त्री कन्या प्रदीयमाना कु-लायैव प्रदीयत इत्युपदिशन्ति धर्मज्ञाः। तस्मात् सगोत्रेष्वेव समाचक्षीतेति ॥३॥ तमिमं नियोगं दूषयति— * तदिन्द्रियदौर्बल्याद्विप्रतिपन्नम् ॥४॥ यद्यप्येवं पूर्वे कृतवन्तः, तथापि तदद्यत्वे विप्रतिपन्नं विप्रतिषिद्धम् । कु-तः इन्द्रियदौर्बल्यात् । दुर्बलेन्द्रिया ह्यद्यत्वे मनुष्याः । ततश्च शास्त्रव्या-जेनापि भर्तृव्यतिक्रमेऽतिप्रसङ्गस्स्यादिति ॥४॥ सगोत्रविषयेऽपि यो वि-शेषस्सोऽपि नास्तीत्याह— * अविशिष्टं हि परत्वं पाणेः ॥ ५ ॥ येन पाणिना पूर्वमग्निसाक्षिकं पाणिर्गृहीतः कन्यायाः, तस्मात् पाणेरन्यो भवति । सगोत्रस्यापि पाणिर्यस्मादेवं पाणेः परत्वमविशिष्टं समानं, तस्मा-दविशेष इति । अवशिष्टमित्यपपाठः ॥ ५ ॥ पाणिरन्यो भवतु, को दोषः * तद्व्यतिक्रमे खलु पुनरुभयोर्नरकः ॥ ६ ॥ तस्य पाणेर्व्यतिक्रमे उभ-योर्दम्पत्योः नरको भवति । खलु पुनरिति प्रसिद्धिद्योतकौ निपातौ । अप-त्यापि न स पाणिर्व्यतिक्रमणीयः। यः पूर्वं गृहीतः भार्ययापि, न स पाणिर्व्याज्यः। ये-न पूर्वमात्मनः पाणिः गृहीतः ॥६॥ * नियमारम्भणो हि वर्षीयानभ्युदय एवमारम्भणादपत्यात् ॥७॥ अपत्या आरभ्यतेऽनेनेत्यारम्भणः योऽयं दम्पत्योः परस्परनियमः, स आरम्भणो यस्य स नियमारम्भणः । एवम्भूतो योऽभ्यु-दयस्स एव वर्षीयान् वृद्धतरः । कस्मात् वर्षीयान् एवमुक्तप्रकारेण नियो-गलक्षणेन यदपत्यमारभ्यते तस्मादेवमारम्भणादपत्याद्वर्षीयानिति । अपत्या-दिति पाठः । आपत्यादिति प्रायेण पठन्ति ॥७॥ * नाश्य आर्यश्शूद्रा-याम् ॥ ८ ॥ आर्यस्त्रैवर्णिकः शूद्रायां परभार्यायां प्रसक्तो राज्ञा राष्ट्रा-न्नाश्यः निर्वास्यः ॥ ८ ॥ * वध्यश्शूद्र आर्यायाम् ॥ ९ ॥ शूद्रस्तु त्रैव-र्णिकस्त्रियां प्रसक्तो वध्यः । एतच्च योऽन्त पुरादिष्वधिकृतो रक्षकस्सन्

स्वयं गच्छति, तस्य भवति । अन्यस्य तु पूर्वोक्तं शिश्नच्छेदनमेव । तथा च शूद्राधिकारे गौतमः—'आर्यस्त्र्यभिगमने लिङ्गोद्धारः स्वहरणं च गोप्ता चे-द्वधोऽधिकं' इति । याज्ञवल्क्येन तु प्रातिलोम्येन गमनमात्रे वध उक्तः—'सजातावुत्तमो दण्ड्यः आनुलोम्ये तु मध्यमः । प्रातिलोम्ये वधः पुंसां स्त्री-णां नासादिकृन्तनम् ॥' इति । सोऽनुबन्धाभ्यासाद्यपेक्षो द्रष्टव्यः । तथा 'नश्य-त्येश शूद्रीं यामि'त्याचार्यवचनमप्यभ्यासापेक्षं ब्राह्मणादि क्रमविवाहे या शू-द्रा, तद्विषयं वा द्रष्टव्यम् ॥ ९ ॥ * दारं चास्य कर्शयेत् ॥ १० ॥ अ-स्य शूद्रस्य या दारभूता तेन भुक्ता त्रैवर्णिकस्त्री ता च कर्शयेत् । व्रतनि-यमोपवासैः, या प्रजाता न भवति तद्विषयमेतत् । 'ब्राह्मणक्षत्रियविशां स्त्रियः शूद्रेण सङ्गताः । अप्रजाता विशुध्यन्ति प्रायश्चित्तेन नेतराः ॥' इति स्मरणात् ॥ १० ॥ * सवर्णायामन्यपूर्वायां सकृत्सन्निपाते पादः पततीत्यु-पदिशन्ति ॥ ११ ॥ अन्यः पूर्वः पतिः यस्यास्सा अन्यपूर्वा परभार्या तस्यां सवर्णायां सकृद्गमने पादः पतति । पतितस्य द्वादशवार्षिकं प्राय-श्चित्तं तस्य तुर्योऽशस्त्रीणि वर्षाणि प्राकृतं ब्रह्मचर्यमस्य प्रायश्चित्तम् । ए-तच्च श्रोत्रियभार्यायामृतुकाले कामतः प्रथमं दूषकस्य । तत्र गौतमः—'द्वे परदारे त्रीणि श्रोत्रियस्ये'ति ॥ ११ ॥ * एवमभ्यासे पादः पादः ॥ १२ ॥ एवमभ्यासे प्रत्यभ्यासं पादः पादः पतति ॥ १२ ॥ अतः * चतुर्थे सर्वम् ॥ १३ ॥ चतुर्थे सन्निपाते सर्वमेव पतति । ततश्च पूर्णद्वादशवार्षिकं कर्तव्य-म् । तृतीये नव वर्षाणि । द्वितीये षड्वर्षाणि । एतच्च प्रतियोगं स्त्रीभेदेन प्रथ-मदूषकस्य । एकस्यामेव त्वभ्यासे कल्प्यम् । तत्र 'यत्पुंसः परदारेषु तच्चै-नां चारयेद्व्रत'मिति स्मरणात् । स्त्रियाः अपि प्रतियोगं पादः पादः पततीति वदनुरोधेन कल्प्यम् ॥ १३ ॥ * जिह्वाच्छेदनं शूद्रस्यार्यं धार्मिकमाक्रो-शतः ॥ १४ ॥ शूद्रो द्विजातीनामन्यतमं धार्मिकं स्वकर्मस्थं यद्याक्रोशति निन्दति गर्हते, तदा तस्य जिह्वा छेत्तव्येति । मनुस्तु सामान्येनाह—'ये-नाङ्गेनावरो वर्णो ब्राह्मणस्यापराध्नुयात् । तदङ्गं तस्य छेत्तव्यं तन्मनोरनु-शासनम् ॥' गौतमस्तु—'शूद्रो द्विजातीनभिसन्धायाभिहत्य च दण्डपारु-ष्याभ्यामङ्गं मोच्यो येनोपहन्या'दिति ॥ १४ ॥ * वाचि पथि शय्यायामा-

मन इति, समभिभवतो दण्डताडनम् ॥ १५ ॥ यस्तु शूद्रो वागादिभिरार्यैः समीभवति न तु न्यग्भूतः तस्य दण्डेन ताडनं कर्तव्यम् । स दण्डेन ताडयितव्यः । अयमस्य दण्डः ॥ १५ ॥ *पुरुषवधे स्तेये भूम्यादान इति स्वान्यादाय वध्यः ॥ १६ ॥ भूम्यादानं परक्षेत्रस्य बलात्स्वीकारः, पुरुषवधादिषु निमित्तेषु शूद्रस्सर्वस्वहरणं कृत्वा पश्चाद्वध्यः मारयितव्यः ॥ १६ ॥ *चक्षुर्निरोधस्त्वेतेषु ब्राह्मणस्य ॥ १७ ॥ ब्राह्मणस्य त्वेतेषु निमित्तेषु चक्षुषोर्निरोधः कर्तव्यः । पट्टबन्धादिना चक्षुषी निरोद्धव्ये । यथा यावज्जीवं न पश्यति । न तूत्पाटयितव्ये । न शारीरो ब्राह्मणदण्डः । अक्षतो ब्राह्मणो व्रजे'दिति स्मरणात् । चक्षुनिरोध इति रेफलोपश्छान्दसः ॥ १७ ॥ *नियमातिक्रमिणमन्यं वा रहसि बन्धयेत् ॥ १८ ॥ यो वर्णाश्रमप्रयुक्तान्नियमानतिक्रामति तं नियमातिक्रमिणमन्यं वा प्रतिषिद्धानां कर्तारं रहसि बन्धयेत् निगलितं निरुन्ध्यात् ॥ १८ ॥ *आसमापत्तेः ॥ १९ ॥ यावदसौ नियमान् प्रतिपत्स्ये प्रतिषिद्धेभ्यो निवर्तिष्य इति ब्रूयात् ॥ १९ ॥ *असमापत्तौ नाश्यः ॥ २० ॥ यद्यसौ दीर्घकालं निरुद्धोऽपि न समापद्येत, ततो नाश्यः निरस्यः ॥ २० ॥ *आचार्यर्त्विक्स्नातको राजेति त्राणं स्युरन्यत्र वध्यात् ॥ २१ ॥ यदि दण्डे प्रवृत्तं राजानमाचार्यो ब्रूयात् 'अहमेनमतः परं नापराधिष्यामि मुच्यतामयमिति । अतोऽङ्गदण्डे प्राप्तेऽर्थदण्डमर्थदण्डे प्राप्ते ताडनं ताडने प्राप्ते धिग्दण्डमिति कृत्वा तद्वशे विसृजेत् । एवमृत्विजि । ऋत्विगाचार्यौ राज्ञस्स्वभूतौ न दण्ड्यस्य । स्नातको विद्यावृत्ताभ्याम् । राजा अनन्तरादिः । सर्व एते राज्ञस्सम्मान्याः । अतस्ते दण्ड्यस्य त्राणं स्युः । उक्तेन प्रकारेण रक्षका भवेयुः । नान्यः कश्चित् । तेऽप्यन्यत्र वध्यात् यस्य वधानुगुणोऽपराधः न तस्याचार्यादयोऽपि त्राणम् । हन्तव्य एवासु इति ॥ २१ ॥

सप्तविंशतितमी खण्डिका । प्र०२ प०१० ख०॥२७॥
इति चापस्तम्बधर्मसूत्रवृत्तौ हरदत्तमिश्रविरचितायाम्
उज्ज्वलायां द्वितीयप्रश्ने दशमः पटलः ॥१०॥

*क्षेत्रं परिगृह्योत्थानाभावात्फलाभावे यस्समृद्धस्स भावि तदपहार्यः ॥ १ ॥ वैश्यो वैश्यवृत्तिर्वा परस्य क्षेत्रं कृष्यर्थं परिगृह्य उत्थानं कृषिविषयं यत्नं न कुर्यात् तदभावाच्च फलं न स्यात् तत एतस्मिन्निमित्ते स कर्षकस्समृद्धश्चेत्तस्मिन् भोगे यत्तद्भावि फलं तदपहार्यं अपहारयितव्यः । राज्ञा क्षेत्रस्वामिने दाप्य ॥ १ ॥ * अवशिनः कीनाशस्य कर्मन्यासे दण्डताडनम् ॥२॥ कीनाश कर्षक । तस्यावशिन स्वतन्त्रस्य निर्धनस्य दासस्य कर्मन्यासे स चेत् कृषिकर्म न्यसेत् विच्छिन्द्यात् तस्य दण्डेन ताडनं कर्तव्य स दण्डेन ताडयितव्य । अर्थाभावादर्थदण्डः । अपर आह—अवशी अवश्य अविधेय य क्षेत्रं परिगृह्यावशिनः कीनाशस्य कृषिकर्म न्यसेत् न स्वय कुर्यात् तदा स परिग्राहको दण्डेन ताडयितव्य इति । यदि वा अवशिन इति बहुव्रीहि । यस्य कीनाशस्य वशी स्वतन्त्रः क्षेत्रवान्नास्ति, स यदि पूर्वकृष्टस्य क्षेत्रस्य कृषिकर्म न्यसेत् न कुर्यात् तस्य दण्डताडन दण्ड इति राजपुरुषस्योपदेश ॥२॥ * तथा पशुपस्य ॥ ३ ॥ पशुपो गोपाल तस्यापि कर्मन्यासे पालनस्याकरणे दण्डेन ताडनं दण्ड ॥३॥ * अवरोधनं चास्य पशूनाम् ॥ ४ ॥ ये चास्य पशवो रक्षणाय समर्पितास्तेषा चावरोधनमपहरण कर्तव्यमन्यस्य गोपस्य समर्पणीया इति ॥४॥ * हित्वा व्रजमादिनः कर्शयेत्पशून् ॥५॥ ये पशवो व्रजे गोष्ठे निरुध्यन्ते व्रजं हित्वा आदिनस्सस्यादेर्भक्षयितारो भवन्ति, तान् कर्शयेत् बन्धनादिना कृशान् कुर्यात् । क यस्य भक्षित स द्रव्य, राजपुरुषो वा ॥५॥ * नातिपातयेदवरुध्य पशून्मारणं नाशनं वा स्वामिभ्योऽवसृजेत् ॥६॥ नातिनिग्रहं कुर्यात् न नाशयेदिति । अवरुध्य यदि पशुपः पशूनवरुध्य पालयितुं गृहीत्वा सम्यक्स्थाने विमुच्याऽपेक्षया मारयेत् नाशयेद्वा । नाशनं चोरादिभिरपहरणम् । स्वामिभ्य पशूनवसृजेत् प्रत्यर्पयेत् । पश्वभावे मूल्यम् ॥६॥ * प्रमादादरण्ये पशून्सृष्टान् दृष्ट्वा ग्राममानीय स्वामिभ्योऽवसृजेत् ॥ ७॥ यदि स्वामिनः प्रमादादरण्ये पशूनुत्सृजेयुः वनपालकेन ततस्तान् दृष्ट्वा ग्राममानीय स्वामिभ्य अर्पयेत् । क यस्तत्र रक्षकत्वेन राज्ञा नियुक्त ॥७॥ * पुनः प्रमादे

**सकृदवरुध्य** ॥८॥ पुनः प्रमादादुत्सृष्टेषु सकृदवरुध्य स्वामिभ्योऽवसृ ॥८॥ ***ततः ऊर्ध्वं न सृक्षेत्** ॥९॥ ततो द्वितीयात् प्रयोगादूर्ध्वं 'ग्रा नीयेत्यादि' यदुक्तं तत्र सृक्षेत् नाद्रियेत तस्मिन् विषये उपेक्षेत ॥९

***परपरिग्रहमविद्वानाददान एधोदके मूले पुष्पे फले गन्धे ग्रा शाक इति वाचा बाध्यः** ॥१०॥ एधांश्चोदकं च एधोदकम्। ग्रासो गवा र्थो यवसादि। सर्वत्र विषयसप्तमी। यः परपरिग्रहोऽयमित्यविद्वानजान एधादिमादत्ते गृह्णाति, स तस्मिन्विषये तत्र नियुक्तेन राजपुरुषेण निष्ठुरं वाचा बाध्यः निवार्यः ॥१०॥ ***विदुषो वाससः परिमोषणम्** ॥११ यस्तु विद्वानेवादत्ते तस्य वाससोऽपहारः कर्तव्यः ॥११॥ ***अदण्ड्यः कामकृते तथाप्राणसंशये भोजनमाददानः** ॥१२॥ तथाशब्दस्य भो जनमित्यनेन सम्बन्धः। प्राणसंशयदशायामेधोदकादेरादाने कामकृतेऽप्य दण्ड्यः। तथा भोजनमप्याददानः प्राणसंशये न दण्ड्य इति ॥१२॥

***प्राप्तनिमित्ते दण्डाकर्मणि राजानमेनस्स्पृशति** ॥१३॥ प्राप्तं दण्ड निमित्तं यस्य तस्मिन् पुरुषे दण्डाकर्मणि दण्डस्याक्रियायां यदि दयया लोभेन वा प्राप्तदण्डं न कुर्यात् तदा तदेनो राजानमेव स्पृशति ॥१३॥

इति अष्टाविंशतितमी खण्डिका ॥ ५०२ प्र०११ ख०२८ ॥

ननु शास्त्रफलं प्रयोक्तरि, तत्कथमन्यत्कृतमनाऽन्यं स्पृशति? उत, बहु विधत्वात् कर्तृभेदस्येत्याह— ***प्रयोजयिता मन्ता कर्तेति स्वर्गनरकफ लेषु कर्मसु भागिनः** ॥१॥ धर्ममधर्मं वा प्रकुर्वाणं यः प्रयुङ्क्ते इ ममित्थं कुर्विति स प्रयोजयिता। स चानेकप्रकारः। आज्ञापकोऽभ्यर्थयि ता अनुग्राहक इति। भृत्यादेर्निकृष्टस्य प्रवर्तना आज्ञा। गुर्वादेराध्यस्य प्रवर्तनाभ्यर्थना। अनुग्रहो द्विविधः उपदेशस्तत्सधर्माचरणं चेति। तत्र य इत्थमर्थमुपदिशति त्वं शत्रुमित्थं व्यापादय धर्मार्जनेऽयं तेऽ भ्युपाय इति स उपदेष्टा। यः पुनः केनचिज्जिघांसितं पलायमानं वा निरु णद्धि निरुद्धश्च हन्यते स निरोद्धानुग्राहकः। मन्ता अनुमन्ता यस्यानुम तिमन्तरेणार्थो न निवर्तते स राजादिको धर्माधर्मयोरनुमन्ता। कर्ता सा

नास्तिक्यादी निवर्तकः । एते त्रयोऽपि स्वर्गफलेषु नरकफलेषु च कर्मसु धर्मेष्वधर्मेषु च भागिनः फलस्यांशभागिनः फलस्यांशभाजः । सर्वेषां च यथाकथंचित् कर्तृत्वम् ॥ १०॥ यद्यप्येवम् *यो भूय आरभते तस्मिन् फलविशेषः ॥ २ ॥ तेषु प्रयोजकादिषु यो भूय आरभते । यस्य व्यापारोऽर्थनिर्वर्तनावधिकमुपयुज्यते, तस्मिन् फलविशेषो भवति ॥ २ ॥ *कुटुम्बिनौ धनस्येशाते ॥ ३ ॥ कुटुम्बिनौ दम्पती । तौ धनस्य परिग्रहे विनियोगे च ईशाते । यद्यप्येवं, तथापि भर्तुरननुज्ञया विना स्त्री विनियोक्तुं प्रभवति । भर्ता तु प्रभवति । एतेन वेदितव्यं 'न हि भर्तुर्विप्रवासे नैमित्तिके दाने स्तेयमुपदिशन्ती'ति ॥ ३ ॥ *तयोरनुमतेऽन्येऽपि तद्धितेषु वर्तेरन् ॥ ४ ॥ तयोरनुमतेऽनुमतौ सत्यामन्येऽपि पुत्रादयः तयोरैहिकेषु आमुष्मिकेषु च हितेषु वर्तेरन् द्रव्यविनियोगेनापि ॥ ४ ॥ *विवादे विद्याभिजनसम्पन्ना वृद्धा मेधाविनो धर्मेष्वविनिपातिनः ॥ ५ ॥ अर्थिप्रत्यर्थिनोर्विप्रतिपत्तिर्वादो विवादः । तत्र विद्यादिगुणसंयुक्ता निर्णेतारस्स्युरिति वाक्यशेषः । विद्या अध्ययनसम्पत्तिः अध्ययनसहितं शास्त्रज्ञानं वा । अभिजनं कुलशुद्धिः । वृद्धाः परिणतशरीराः । मेधाविनः ऊहापोहकुशलाः । धर्मेषु वर्णाश्रमप्रयुक्तेषु अविनिपातिनः विनिपातः प्रमादः तद्रहिताः ॥ ५ ॥ *सन्देहे लिङ्गतो दैवेनेति विचित्य ॥ ६ ॥ ते च निर्णयन्तः सन्देहस्थलेषु लिङ्गतोऽनुमानेन दैवेन तप्तमाषादिना इतिशब्दः प्रकारे । यच्चान्यदेवं युक्तं वचनं व्याख्यानादि तेन च विचित्यार्थस्थितिमन्विष्य निर्णेतारस्स्युरित्यध्याहृतेन वाक्यपरिसमाप्तिः ॥ ६ ॥ अथ साक्ष्यविधिः— *पुण्याहे प्रातरग्नाविद्धेऽपामन्ते राजवत्युभयतस्समाख्याप्य सर्वानुमते मुख्यस्सत्यं प्रश्नं ब्रूयात् ॥ ७ ॥ पुण्याहे दैवतक्षेत्रे प्रातर्मध्याह्नादिषु अग्नाविद्धे अग्निमिद्ध्वा तत्समीपे अपामन्ते उदकमुपनिधाय तत्समीपे राजवति राजाधिष्ठिते सदसि । राजग्रहणं प्राड्विवाकादेरुपलक्षणम् । उभयतः उभयोरर्थिप्रत्यर्थिनोस्समाख्याप्य किमत्र युवयोः प्रमाणमतः साक्षीत्यात्मानं ख्यापयित्वा । यद्वा उभयत उभयोरपि पक्षयोस्सत्यवचने च असत्यवचने च साक्षिणो यद्वाविफलं तत्...

ह्यनृतं त्यक्त्वा सत्येन स्वर्गमेष्यसि । अनृतेन महाघोरं नरकं प्रतिपत्स्यसे इत्यादिना प्रकारेण समाख्याप्य प्राड्विवाकादिभिः पृष्ट इति शेषः । अनुमते अर्थिप्रत्यर्थिनोस्सभ्यानां चानुमतौ सत्यां सभ्यो मुख्यः साक्षिगुणैरुपेतो दोषैश्च वर्जितस्साक्षी प्रश्नं पृष्टमर्थं सत्यं यथात्मना ज्ञातं तथा ब्रूयात् ॥७॥ *अनृते राजा दण्डं प्रणयेत् ॥ ८ ॥ साक्षिणानृतमुक्तमिति प्रतिपन्ने राजा तं दण्डयेत् । अत्र मनुः—'यस्य दृश्येत सप्ताहादुक्तसाक्ष्यस्य साक्षिणः रोगोऽग्निर्ज्ञातिमरणं दाप्यो दण्डं च तत्समम् ॥' इति॥८॥ न केवलमसत्यवचने राजदण्डः, किं तर्हि—*नरकश्चात्राधिकः साम्पराये ॥ ९॥ सम्परायः परलोकः । तत्र नरकश्च भवति न तु 'राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः । निर्मलास्स्वर्गमायान्ति सन्तस्सुकृतिनो यथे'त्यस्यायं विषय इति॥९॥ *सत्ये स्वर्गस्सर्वभूतप्रशंसा च ॥ १० ॥ सत्य उक्ते स्वर्गो भवति। सर्वाणि च भूतान्येनं प्रशंसन्ति अपि देवाः ॥ १०॥ *सा निष्ठा या विद्या स्त्रीषु शूद्रेषु च ॥११॥ स्त्रीषु शूद्रेषु च या विद्या सा निष्ठा समाप्तिस्तस्यामप्यधिगतायां विद्याकर्म परितिष्ठतीति ॥११॥* आथर्वणस्य वेदस्य शेष इत्युपदिशन्ति ॥१२॥ अथर्वणा प्रोक्तमधीयते ये ते आथर्वणिकाः। वसन्तादिभ्यष्ठक् । तेषां समाम्नायः आथर्वणः । आथर्वणिकस्येकलोपः। आथर्वणः। तस्य वेदस्य शेष इत्युपदिशन्ति धर्मज्ञाः । या विद्या स्त्रीषु शूद्रेषु चेति ॥१२॥ *कृच्छ्रा धर्मसमाप्तिस्समाम्नानेन लक्षणकर्मणा तु समाप्यते ॥१३॥ समाम्नानं प्रतिपदपाठः । तेन धर्मसमाप्तिः कृच्छ्रा न शक्या कर्तुम् । किं तु लक्षणकर्मणा समाप्यते येन सामान्येन न भिन्नानीमधिगम्यन्ते तल्लक्षणं, तस्य कर्मणा करणेन समाप्यते । कर्मणात्विति द्वितकारपाठोऽयमार्षः । आदिति वा निपातस्य प्रश्लेषः स च सत्यत्वस्यार्थे द्रष्टव्यः ॥१३॥*तत्र लक्षणं सर्वजनपदेष्वेकान्तसमाहितमार्याणां वृत्तं सम्यग्विनीतानां वृद्धानामात्मवतामलोलुपानामदाम्भिकानां वृत्तसादृश्यं भजेत । एवमुभौ लोकावभिजयति ॥ १४॥ पूर्वेण गतम्॥१४॥ *स्त्रीभ्यस्सर्ववर्णेभ्यश्च धर्मशेषान्प्रतीयादित्येक इत्येके ॥१५॥ उक्तव्यतिरिक्ता ये धर्मा धर्मशेषास्तान् स्त्र्यादीनामपि सकाशात् प्रतीया

दित्येके मन्यन्ते । देशे च प्रतिजनपदं प्रतिकुलं च भिन्नास्तथैव प्रतिपत्तव्याः । तत्र द्रमिडाः कन्यामेषस्थे सवितर्यादित्यपूजामाचरन्ति । भूमौ मण्डलमालिख्येत्यादीन्युदाहरणानि । द्विरुक्तिरध्यायपरिसमाप्त्यर्था ॥ १५ ॥

इति एकोनत्रिंशत्तमी खण्डिका ॥ प्र०२ प०११ ख०२९ ॥

इति आपस्तम्बधर्मसूत्रवृत्तौ हरदत्तमिश्रविरचितायाम्

उज्ज्वलायां द्वितीयप्रश्ने एकादशः पटलः ॥ ११ ॥

## ॥ द्वितीयप्रश्नश्च समाप्तः ॥

---

## आपस्तम्बधर्मसूत्रमुज्ज्वलासहितं समाप्तिमगात्
## शुभमस्तु

शेवाभ्यो नमः ।